चौखम्बा-संस्कृत-ग्रन्थमाला।

( ग्रन्थसंख्या ८ )

—:o:—

# ब्रह्मसूत्रभाष्यम्।

( श्रीमद्बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्र-श्रीमद्विज्ञान-
भिक्षुविरचितम् विज्ञानामृताख्यं व्याख्यानम् )

अडकरोपनामक-श्रीमुकुन्दशास्त्रिणा परिशोधितम्।



काश्याम्।

...ास-नाम्नि यन्त्रालये, श्रीयुत बाबु हरिदासगुप्तेन,
मुद्रयित्वा प्रकाशितम्।

सन् १९०१ ईस्वी

वैक्रमसम्वत् १९५८

शुभम्।

# भूमिका ।

## विज्ञानामृताख्य भाष्यस्य ।

इह खलु संसारचक्रे विपरिवर्तमानानां त्रिविधतापतप्तानाम् ऐकान्तिकात्यन्तिकदुःखनिवृत्तिसाधनतया पुरुषार्थोपायमभिवाञ्छतां प्रेक्षावतां पुरुषार्थोपायान्वेषणा तावत् प्रथमं भवति । द्विविधश्च पुरुषार्थो दृष्टादृष्टभेदेन, तत्र दृष्टे विषये बुभुक्षितोऽश्नीयादित्यादिशास्त्रं नोपयुज्यते तत्र शास्त्रव्यापारं विनापि प्रवृत्तिदर्शनात्, अदृष्टे तु स्वर्गापवर्गमात्रे नैसर्गिकमोहान्धकारविलुप्तालोकस्य लोकस्य शास्त्रमेव प्रकाशः तदेव दिव्यं चक्षुरस्मदादेः तस्मादस्मदादिभिः शास्त्रमेवाधिगन्तव्यम् । तच्च कर्मब्रह्मोपासनात्मकम्, तत्प्रतिपादकाश्च वेदाः मन्त्रब्राह्मणोभयात्मकाः ते च स्वतः प्रमाणभूताः, तन्मूलप्रमाणभूता मन्वादिस्मृतयः पुराणानि च । एते च वेदाः साक्षादेव पुरुषार्थसाधनोपदेशस्वभावाः "अग्निहोत्रं जुहुयात् स्वर्गकामः" "आत्मा वा अरे ज्ञातव्य" इत्यादिश्रुतेः । स्मृतिपुराणाभ्यामपि वैदिक एवार्थः प्रकाश्यते यथोक्तम् ।

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥

इति तदेवं वेदस्मृतिपुराणानां पुरुषार्थसाध-

नोपदेशस्वभावत्वाच्छास्त्रत्वम्। "तत्र उदिते जुहोति" "अनुदिते जुहोती"त्यादिवेदवाक्यानां विरुद्धार्थाभिधायित्वेन यूपमनक्तीत्यादीनां घृतेन तैलेन वेत्यादिसंशयजनकत्वेन च व्यवस्थितवेदवाक्यार्थानवधारणाद्व्यवस्थायै वेदवाक्यार्थविचारात्मिकां मीमांसां महानुभावो जैमिनिः सूत्रयां चकार, तया च साक्षात् विध्येकवाक्यतया सर्वेषां वेदवाक्यानां कर्मपरत्वं प्रतिपादयामास। आचार्यास्तु "आत्मैवेकः सृष्ट्यादावासीत् स एव "एको ऽहं बहुस्यां प्रजायेये" त्यादिश्रुतिप्रामाण्यात् स्वेच्छया व्योमादिप्रपञ्चरूपेण परिणमति बीजमिव वृक्षरूपेण न च प्रकाशरूपस्य ब्रह्मणो जडत्वापत्तिः परमार्थतो ऽपरिणामात् किं त्वविद्यावशात् अपरिणतमेव परिणतमिव चिद्रूपमेकमेव जडरूपमिवाद्वितीयं सद्वितीयमिव भासते आत्मा, तथा चाविद्योपादाना स्वप्नप्रपञ्चवन्महदादिप्रपञ्चसृष्टिः अत एव "सर्वं खल्विदं ब्रह्म" "आत्मैवेदं सर्वं" "नेह नानास्ति किं चन" त्यादि श्रुतयोऽप्युपपद्यन्ते, किं च नानात्मदर्शने निन्दापि श्रूयते "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती"ति तस्मात्सर्वमिदम् अद्वितीयं ब्रह्म पारमार्थिकं भेददृष्टिस्त्वाविद्योपादाना तन्नाशश्चाद्वितीयात्मज्ञानेन ततश्चैकान्तिकात्यन्तिकदुःखनिवृत्तिर्भवति। न च कर्मणां वैफल्यं ज्ञानसाधनीभूतचित्तशुद्धिद्वारा तेषामुपयोगादित्याहुः। विज्ञानभिक्षवस्तु आत्मा चैक ईश्वरपदवाच्यः सृष्ट्यादा-

त्वासीत् स एव मायाख्यनिजशक्तिवशात् सर्वेश्वरः क्लेशकर्मविपाकाशयैरपरामृष्टोऽपि स्वान्तःस्थाभिः प्रकृतिपुरुषादिशक्तिभिरन्योन्यसंयोगान्महदादिकं सृजति ऊर्णनाभिप्रभृतिरिव तन्त्वादिकं, स एव च कर्मफलानि प्रयच्छति महाराज इव सेवापराधयोः फलम्, पुनश्च तानेवान्ते स्वात्मन्युपसंहृत्याद्वितीयः सन्नेक एवावशिष्यते समुद्रे तरङ्गबुद्बुदादिवत् यच्चमकुरं मायेन्द्रजालसदृशं सर्वं विकारजातं वाचारम्भणमात्र यतो भिन्नं किमपि न भवति "सर्वं खल्विदं ब्रह्म तज्जलानि"ति श्रुतेः। यस्य च सूर्यकिरणवत्सर्वे जीवा अंशाः यदधीनसत्तास्फूर्त्तिकत्वात्तु प्रकृतितत्कार्यजीवादयोऽपि स्वाप्नवस्तुवत् दृश्यत्वेन स्वतः सिद्धत्वाभावेन च न परमार्थसन्तः यश्च स्वतो मायातत्कार्यजीवादिभ्यो भिन्नाभिन्नो जीवाविलक्षणचिन्मात्रोऽत एव यः पञ्चविंशतितत्त्वानामात्मा, जीवः प्राणादिवज्जडतया अनात्मैव, तमेव परमात्मानं निखिलवेदान्तवाक्यार्थभूतं परं ब्रह्म "स म आत्मेति" "सोऽहमिति" मायाजीवादिविवेकेनात्मतया साक्षात्कृत्याऽविद्याकामधर्माधर्मादिक्षये निखिलदुःखादिद्वैवात्यन्तं विमुच्यते" "न तस्य प्राणा उत्क्रामन्ती"ति श्रुतेः। किंच "आत्मा वै जायते पुत्र" इत्यादिश्रुत्या अग्निविस्फुलिङ्गपितापुत्रादिवदंशांशिभावो विवक्षितो न स्वांशाद्वित् तथा सति अंशशब्दस्य गौणत्वं स्यात् घटाकाशोऽप्याकाशादिभक्तो न भवति लक्षणान्यत्वाभावात्

घटाकाशधर्माणामप्याकाशधर्मत्वात् अवच्छिन्ने त्वां-शशब्दो गौणो ऽवयवादिशब्दवदिति अंशत्वं च सजातीयत्वे सति अविभागप्रतियोगित्वं, तदनुयोगित्वं चांशित्वम्, साजात्यं च येन रूपेणांशता तेन अथ वा द्रव्यत्वसाक्षाद्व्याप्यजात्या ग्राह्यम् । अयमेवार्थो मोक्षधर्मे ऽपि बहवः पुरुषा ब्रह्मन्नुताहो एक एव त्विति प्रश्ने ।

बहवः पुरुषा राजन् सांख्ययोगविचारिणाम् ।
नैवमिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ॥

इत्यनेन पुरुषनानात्वमेव विचारतो व्यवस्थाप्य व्यासोक्तं पुरुषैक्यं पितापुत्रवदविभागेनोपपादितम् ।

समासतस्तु यद् व्यासः पुरुषैकत्वमुक्तवान् ।
तत्राहं संप्रवक्ष्यामि प्रसादादमितौजसः ॥
बहूनां पुरुषाणां हि यथैका योनिरिष्यते ।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकमिति

गीतायां च ॥

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥
ममैवांशो जीवलोके जीवभूतः सनातनः ।

इत्यादि । श्रुतयो ऽप्येवं "यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति"। "बालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः

स चानन्त्याय कल्पते" इत्यादि भस्य चांशांशिभावस्य भेदप्रतिपादनस्य फलम् अंशांशिनोरुत्सर्गत एकरूपतया जीवस्याप्यसंसारित्वविभुत्वसर्वाधारत्वादिज्ञापनम् । किं च भेदाभेदौ चात्र विभागाविभागपरौ अहेतिभिः अभेदवाक्यानुरोधेन भेदवाक्यानामौपाधिकभेदपरत्वम् यथा कल्प्यते तथा भेदवाक्यानुरोधेनाऽभेदवाक्यानामविभागादिलक्षणाभेदपरत्वम् अविरोधस्योभयथैव सम्भवात् श्रूयते चाविभागादिरूपाभेदोऽपि श्रुतिस्मृत्यादिषु "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतम न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तमि"त्यादिश्रुतिः स्मृतिषु च ।

अविभक्तं च भूतेषु स्वविभक्तमिव स्थितम् ।
व्यक्तं स एव वाव्यक्तं स एव पुरुषःपरः ॥

इत्यादि, नचाविभागपरत्वे सत्यभेदशब्दे लक्षणा स्यादिति वाच्यम् । भिदिविदारणइति विभागेऽपि भिदिधातोरनुशासनात् । ननु तत्त्वमस्याद्यभेदवाक्यानामेव मोक्षफलश्रवणात् सम्यग्ज्ञानपरत्वमसङ्कोचस्य युक्त इति चेन्न । पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेतीत्यादिश्रुतिभिर्भेदज्ञानस्यापि मोक्षहेतुत्वश्रवणाद्भेदज्ञानस्य विवेकज्ञानतया अविद्यानिवर्तकत्वेन साक्षान्मोक्षहेतुत्वम् "सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यमि"त्यादिश्रुतेः ।

प्रधानपुरुषव्यक्तकालानां परमं हि यत्।
पश्यन्ति सूरयः शुद्धं तद्विष्णोः परमं पदम्॥

ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमित्यादिस्मृतेश्च। किं च अभेदवाक्यान्यपि साक्षादविद्यानिवर्तकत्वासम्भवेन ब्रह्मात्मतावाक्यानामेव शेषभूतानि न ह्यभेदज्ञानं साक्षादेवाहंदुःखीत्यादिलक्षणामविद्यामुच्छेत्तुमर्हति एकस्मिन्नेवाकाशे शब्दतदभाववदेकस्मिन्नेवात्मनि। अवच्छेदभेदेन दुःखादितदभावसम्भवात् किं च ब्रह्माभेदस्य जडेष्वपि श्रवणात्तेन दुःखादिशून्यतासिद्धिः तस्माद्विवेकवाक्यरूपतया भेदवाक्यान्येव बलवन्ति तद्विरोधेन चाभेदवाक्यान्यविभागपरतयैव संकोच्यानि। ननु "य एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति" इत्यादिश्रुतौ।

तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत्।
विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः॥

इत्यादिस्मृतौ च भेदनिन्दाश्रवणान्न भेदपरत्वं श्रुतीनां सम्भवतीति चेन्न। अभेदवाक्यानामविभागपरतया भेदनिन्दावाक्यानामपि विभागलक्षणभेदपरत्वात् प्रतिपाद्यविपरीतस्यैव निन्दार्हत्वात्, अन्यथा "मनसैवेदमाप्तव्यं नेह नानास्ति किं चन" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती"त्यादिश्रुतिषु जडवर्गेष्वपि भेदनिन्दनादभेदः स्यात् विवेकादिवाक्यान्न भवतीति चेत् तुल्यं जीवेऽपि जीवादपि ब्र-

लक्षणो विवेकस्योक्तत्वात् तस्यात्मपरदेहेष्वित्यादिवाक्यं च एकमर्थमिति शब्दादवैधर्म्यलक्षणाभेदपरं प्रकरणाद्ब्रह्मात्मैक्यपरमेव वेति। नन्वेवमपि लाघवमैकात्म्यश्रुतेर्बलमस्त्विति चेन्न। बन्धमोक्षव्यवस्थानुपपत्तिप्रमाणसिद्धतया आत्मनानात्वगौरवस्यैवादर्तव्यत्वात् प्रतिबिम्बावच्छेदरूपाभ्यां बन्धमोक्षादिव्यवस्था तु न युक्ता प्रतिबिम्बस्य तुच्छतया बन्धमोक्षानौचित्यात्। किं च व्यवस्था तत्प्रतिपादकं श्रुत्यादिकं च सर्वमेवात्मातिरिक्तमज्ञानकल्पितमित्यपि न, एवं सति प्रमाणस्यापि बाधेन ब्रह्मातिरिक्तनिषेधस्य श्रुतस्यापि पुनः संशयापत्तेः। स्वाप्नशब्दस्य जाग्रति बाधे पुनस्तच्छब्दबोधितार्थसंशयवत् तथा बन्धमोक्षादिकं सर्वथा नास्तीति श्रवणानन्तरं मननादिषु पुनः प्रवृत्त्यनुपपत्तेश्च। आप्तवाक्यतः पुरुषार्थाभावनिर्णयात्। किं च महदाद्यखिलजगदधिष्ठानकारणत्वं ब्रह्मणः, तत्स्वरूपं च यत्राविभक्तं येनोपष्टब्धं च सदुपादानकारणं कार्याकारेण परिणमतइति यथा सर्गादौ जलाद्यविभक्ताः पार्थिवसूक्ष्मांशास्तन्मात्राख्याः जलेनैवोपष्टम्भात्पृथिव्याकारेण परिणमन्त इत्यतो जलं महापृथिव्या अधिष्ठानकारणमिति, अत एव "आधारमानन्दमखण्डबोधं यस्मिन् लयं याति पुरत्रयं च" "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च"।

यस्य यत् कारणं प्रोक्तं तस्य साक्षान्महेश्वरः।
अधिष्ठानतया स्थित्वा सदैवोपकरोति हि॥

इत्यादिश्रुतिस्मृतयो ऽप्युपपद्यन्ते तथा चैताद्दृशकारणत्वमेवाधिष्ठानकारणत्वमिति चोच्यते। ब्रह्मणश्च स्वाविभक्तप्रकृत्याद्युपष्टम्भकत्वं साक्षितामात्रेणेति जगत्कारणत्वे ऽपि न ब्रह्मणो विकारित्वं न वा प्रकृतिपुरुषादिष्वतिप्रसङ्गः सर्गात्पूर्वमन्येषां साक्षित्वासम्भवात्। एतदेवाधिष्ठानकारणमुपादानकारणमित्युच्यते आचार्यैः। कार्याविभागाधारत्वस्यैवोपादानसामान्यलक्षणत्वात्, अविभागश्चाधारतावत् स्वरूपसंबन्धविशेषो ऽत्यन्तसंमिश्रणरूपो दुग्धजलादेकताप्रत्ययनियामकः। तत्र समवायसंबन्धेन यत्राविभागस्तद्विकारिकारणम्। यत्र च कार्यस्य कारणाविभागेनाविभागस्तदधिष्ठानकारणमिति विकारिकारणाद्भेदः। वैशेषिकादिभिरपीदृशं ब्रह्मणः कारणत्वं निमित्तकारणतेति परिभाष्यते अस्माभिस्तु समवाय्यसमवायिभ्यामुदासीनं निमित्तकारणेभ्यश्च विलक्षणतया चतुर्थमाधारकारणत्वमिति परिभाष्यते, अस्मिंश्च शास्त्रे सृष्टिप्रक्रिया महदादिक्रमेण सांख्ययोगोक्तैव विशेषस्त्वियान् प्रकृतिस्वातन्त्र्यवादिभ्यां सांख्ययोगिभ्यां पुरुषार्थप्रयुक्ता प्रवृत्तिः स्वयमेव पुरुषेण आद्यजीवेन संयुज्यत इत्यभ्युपगम्यते अयस्कान्तेन लोहवत्, अस्माभिस्तु प्रकृतिपुरुषसंयोग ईश्वरेण क्रियत इत्यभ्युपगम्यत इति। किं च "आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठ" इत्यादिश्रुतिभिरात्मारामस्यापि विदुषः कर्मावगमात्

कर्मविशिष्टस्य ज्ञानस्य मोक्षसाधनत्वम्, अत एव "अन्धं तमः प्रविशन्ति ये विद्यामुपासते ततो भूय इव ते तमो य उ विद्यायां रताः । विद्यां चाविद्यां च यस्तद्वेदोभयं सह अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" इत्यादिश्रुतयो

ज्ञानिना ऽज्ञानिनावापि यावद्देहस्य धारणम् ।
तावद्वर्णाश्रमप्रोक्तं कर्तव्यं कर्म मुक्तये ॥
ज्ञानेनैव सहैतानि नित्यकर्माणि कुर्वतः ।
निवृत्तफलतृष्णस्य मुक्तिस्तस्य करे स्थिता ॥

इति वसिष्ठकौर्मादिस्मृतयो ऽपि सङ्गच्छन्ते "किमर्था वयं यक्ष्यामहे" "अग्निहोत्रं न जुहवां चक्रिरे" "तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिन" "कुर्यान्न कर्माणि हि जातवेद" इत्यादि श्रुतिस्मृतिवचनानि हि विदुषां हिंसाविक्षेपादिदोषदुष्टबाह्यकर्मत्यागविधायकपराण्येव न त्वन्तर्यागाद्यान्तरकर्मप्रतिषेधकानि तथा सति ।

कृत्वाग्निहोत्रं स्वशरीरसंस्थं
शारीरमग्निं स्वमुखे जुहोति ।
विप्रस्तु भैक्ष्योपचितैर्हविर्भि-
श्चिताग्निना स व्रजति स्वलोकान् ॥

इत्यादिवचनविरोधापत्तेः । समारोपणादात्मन्यप्रतिषेध इतिन्यायाचार्यवचनविरोधापत्तेश्च-त्याहुः । विज्ञानामृताख्यभाष्यकारस्त्वायं नाम्ना

कर्णाकर्णिकया च गौडसंन्यासीति प्रतिपद्यामहे, सन्ति चापरे ग्रन्था विज्ञानभिक्षुणा निर्मिता: सांख्यप्रवचनभाष्यम् योगवार्त्तिकम् उपनिषद्भाष्यम् योगसार: सांख्यसारश्च एते च ग्रन्था मुद्रिता लिखिताश्च तन्नाम्ना उपलभ्यन्ते अस्य ग्रन्थस्य द्विषष्टिपत्रस्यविंशतिपङ्क्तौ अधिकं तूपदेशरत्नमालाख्यप्रकरणे द्रष्टव्यमिति लेखदर्शनेन सः निबन्धोऽपि विज्ञानभिक्षुविरचित इति प्रतीयते परं च उपदेशरत्नमालाख्यप्रकरणमद्यत्वे नोपलभ्यते, गीताभाष्यमपि विज्ञानभिक्षुभिर्विरचितमिति श्रूयते परं च नोपलभ्यते । यद्यपि सन्ति शाङ्करभाष्य-रामानुजभाष्य-माध्वभाष्य-अणुभाष्यप्रभृतीनि सूत्रभाष्यरत्नानि तथापि यादृश: श्रुतिस्मृतिपुराणानामविरोधेन समन्वय: विदुषां परितोषजनको विज्ञानामृताख्यभाष्ये न तथा भाष्यान्तरे इत्यवधार्य सकलप्राचीनदुर्लभग्रन्थसंपादकशीलै: श्रीगोविन्ददासमहाशयै: काश्यां सम्राड्दत्तमुनसिफपदवीं प्राप्तै: श्रीशबाबूमहाशयैश्चानुमोदित: प्रकाशने प्रवृत्त:, शोधने चास्य पुस्तकमेकम् अत्यशुद्धं संपूर्णं श्रीगोविन्ददासमहाशयात्प्राप्य द्वितीयं च अत्यशुद्धं खण्डितं द्वितीयाध्यायपर्यन्तं च श्रौतस्मार्तपारावारीणश्रीवामनाचार्यमहाशयात्प्राप्य परिशोधयन् रमणीयसीसकाक्षरैर्महताप्रयासेन चौखम्बासीरीजाध्यक्षश्रीयुतबाबूहरिदासगुप्तमहाशयानुमत्या त्वदीय

विद्याविलासयन्त्रालये मुद्रणकार्यं समापयम्।

अतः परं च ब्रह्मसूत्राण्यनुक्रम्य शुकभाष्यं चैतन्यसंप्रदायप्रवर्तकानां गोविन्दभाष्यं श्रीनिवासभाष्यं लिङ्गायितानां श्रीकरभाष्यं च श्रीगोविन्ददासमहाशयानुमत्या मुद्रितानि भविष्यन्ति एतन्नामाङ्कितपुस्तकेषु एकं द्विवाणि वा यन्महाशयसविधे विद्यन्ते ते एतत्पुस्तकमुद्रणाभिलाषिगोविन्ददासमहाशयसमीपे मुद्रणार्थं प्रेषयेयुरिति भूयो भूयः प्रार्थये।

तदिदं विदुषां रसव्यासञ्जनाय भवतुतमामिति जगदीशमर्थये, प्रयतन्तां च मदीयदृष्टिदोषेण बुव्यादिबाहुल्येन सीसकाक्षरयोजकदोषेण वा जनितानि स्खलितानि सुविमृश्य निर्दोषतासंपादनाय गुणैकपक्षपातिनो विद्वांसः, सफलीकुर्वन्तु च मत्परिश्रममितिशम्।

पडकरोपनामक-

मुकुन्दशास्त्री।



# शुद्धिपत्रम् ।

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| २ | २३ | रुप | रूप |
| ५ | ५ | अथशब्द | अतःशब्दश्च |
| ६ | १३ | दयापर | दयापरः |
| ८ | १२ | च्वि | च्वेव |
| ९ | १२ | रुप | रूप |
| १० | ९ | जातवेद | जातवेदः |
| ११ | ५ | फलतात् | फलत्वात् |
| १३ | १० | योगारुढ | योगारूढ |
| १६ | ३ | द्वेष | द्वेष |
| १८ | ६ | वेऽपि | त्वेऽपि |
| २० | ७ | प्रवृते | प्रवृत्ते |
| २१ | ३ | वच्यमाणात्वा | वच्यमाणत्वात् |
| २१ | ४ | पातंजल | पातञ्जल |
| २१ | १९ | प्रवृति | प्रवृत्ति |
| २२ | १० | वृति | वृत्ति |
| २२ | १२ | सबंध | संबन्ध |
| २३ | ३ | प्रवृति | प्रवृत्ति |
| २३ | ० | प्रवृत्या | प्रवृत्त्या |
| २४ | २ | तुच्छत्त्व | तुच्छत्व |
| २४ | ४ | दृष्टान्तत्त्वा | दृष्टान्तत्वा |
| २७ | ७ | द्वेषो | द्वेषौ |

| पृ | पं० | अ० | शु० |
|---|---|---|---|
| ३४ | ६ | कर्तृं | कर्तुं |
| ३५ | २० | दृष्ट्त्वा | दृष्ट्वा |
| ३७ | १९ | दृष्ट्च्या | दृष्ट्वा |
| ३८ | १८ | प्रबिश्य | प्रविश्य |
| ३९ | २१ | विभग | विभाग |
| ४८ | ९ | संवन्ध | संबन्ध |
| ५० | १८ | बिम्ब | विम्ब |
| ५२ | ४ | पुत्रवेतना | पुत्रचेतना |
| ५६ | ७ | सौ | ऽसौ |
| ५६ | १६ | मूक्त | मूक्तम् |
| ७६ | १३ | चतन | चेतन |
| ८४ | १५ | कोऽसङ्ख्य | को'सङ्ख्य |
| ८४ | १९ | ययानौ | ययनौ |
| ८७ | ५ | तमोऽज्ञान | तमोज्ञान |
| ८८ | १९ | नानिर्मू | नाऽनिर्मू |
| ९६ | १२ | निस्तिष्ठन्ति- नानात्मनां | निष्टिम्यन्ति- नानात्ययानां |
| १०२ | १५ | स्यस्य | स्यस्या |
| १०३ | १६ | लणत्व | लक्षणत्व |
| १०७ | २३ | निस्तिष्ठन्ति- नानात्मनां | निष्टिम्यन्ति- नानात्ययानां |
| ११० | १२ | दिक्ये | दिवाक्ये |
| ११२ | १४ | श्रुयते | श्रूयते |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| ११८ | ५ | ग्रग्रस्त्व | ग्रक्यत्व |
| ११८ | १८ | विध्यंव | विध्यत्व |
| १२६ | ५ | ऐंद्र | ऐन्द्र |
| १२६ | १७ | कर्तृवा | कर्तृत्वा |
| १३० | १६ | माच्छा | मात्स्या |
| १३१ | ७ | नाराय.गा | नारायणः |
| १३३ | २० | च्वतेषु | त्वेतेषु |
| १३८ | २० | नन्वेव | नन्वेवं |
| १४० | ६ | श्चन्न | श्चेन्न |
| १४१ | १० | निरुपपद | निह्न |
| १४३ | १२ | नानात्मनां | नानात्मयाना |
| १५१ | ४ | मान्तं | मात |
| १५१ | । | सष्ट | सष्ट |
| १६४ | २२ | ब्दोये | ब्दा ये |
| १६८ | ५ | सांम | सम |
| १९८ | १४ | चत्त | चत्तु |
| २०३ | ११ | दानो | दानीं |
| २२१ | ६ | दात | दाप्त |
| २२१ | २० | काद | कादा |
| २२२ | ३ | नक | नेक |
| २२७ | १ | वर्य | चार्य |
| २२८ | ३ | क्तृप्त | क्तृप्त |
| २२८ | १२ | अस्वार्थ | स्वार्थः |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| २३१ | १ | क्षुद्र | च्छुद्र |
| २३१ | ४ | चिस | चिप्त |
| २३१ | १७ | गाढ़ | गारु |
| २३३ | १६ | मदम् | मन्दम् |
| २३४ | ७ | व्यक | व्येक |
| २३४ | ८ | तारे | तरे |
| २३६ | २३ | भेदे | भेदे |
| २३७ | ५ | न्तवत्व | न्तत्व |
| २३८ | ३ | स्तुति | स्तुति |
| २३८ | १८ | स्वष्ट | स्वंष्ट |
| २३८ | २१ | व्यच्छा | व्यच्छा |
| २४० | २ | मेतद् | चैतन् |
| २४० | १४ | यग्न | पगन्त |
| २५० | ४ | विप्स | वीप्स |
| २५४ | १ | जीलि | जीवलि |
| २५४ | १३ | मीमा | मीमां |
| २६५ | १५ | प्यति | प्यते |
| २६७ | १८ | माग | भाग |
| २६४ | २० | प्रज्ञै | प्रज्ञैः |
| २७५ | १५ | वन्दि | वान्दि |
| २७६ | १ | दितित्या | दित्या |
| २७६ | १० | सिर्गाय | सर्गीय |
| २८६ | १४ | भद | भेद |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| २६४ | १ | दोया. | दोषा |
| २६८ | ४ | कह्व | करु |
| २६८ | ६ | पुग्य | पुराण |
| ३००. | ४ | भाप्ये | भाष्ये |
| ३०३ | ६ | हनन | हन |
| ३०५ | १३ | तोन्या | तोन्यों |
| ३०७ | ४ | पवंगां | पर्वगां |
| ३०८ | १२ | ह्यथो | यथो |
| ३०९ | १ | हात | हात्त |
| ३०६ | ७ | मेदे | भेदे |
| ३१० | ११ | सत्यत्यु | सत्यु |
| ३१४ | ३ | प्रञ्च | प्रपञ्च |
| ३०६ | ४ | प्रञ्च | प्रपञ्च |
| ३१५ | २ | माव | भाव |
| ३१६ | ४ | ञ्जज | ञ्जस |
| ३१७ | ६ | विमु | विभु |
| ३२७ | २ | व्येम्य | व्येभ्य |
| ३२७ | ३ | स्यश | शस्य |
| ३२७ | १७ | कारंका | कारं |
| ३२८ | १० | त्यु | त्यु |
| ३२० | ३ | जान | ज्ञान |
| ३४२ | २१ | चेक | चैक |
| ३४४ | ११ | त्त | त |

| पृ० | पं० | अ० | शु० |
| --- | --- | --- | --- |
| ३४६ | ११ | जद | जवद |
| ३४७ | ८ | क्तयाख्य | व्यक्तयाख्य |
| ३५४ | ६ | तद्धि | तद्धि |
| ३५८ | २० | रवयं | स्वयं |
| ३६० | ३ | नैष्ट | नैर्घृ |
| ३६२ | ७ | धुर्ता | धूर्ता |
| ३६६ | १८ | नास्या | नस्या |
| ३७२ | ६ | क्ष्मती | क्ष्मवती |
| ३७२ | १८ | त्वचि | त्वश्चि |
| ३७४ | ८ | पर | पार |
| ३७६ | १० | विषवसवंन्ध | विषयसंवन्ध |
| ३८१ | १८ | शदवदं | शवदं |
| ३८३ | १० | नीरो | नारो |
| ३८८ | १२ | थञ्च | यञ्च |
| ३९४ | २ | योहा | योर्हा |
| ३९६ | १२ | क्तेशा | क्लेशा |
| ० | १३ | क्तेशा | क्लेशा |
| ४०० | १३ | मूच्मा | सूच्मा |
| ४०४ | १ | ल्यागाभ | ल्यार्गाभ |
| ४०५ | १७ | नूक्तैव | नूक्तैव |
| ४०६ | ४ | क्ताप्राणा | क्ता:प्राणा: |
| ४०८ | १४ | मतव्यम् | मन्तव्यम् |
| ४०९ | १४ | कारंणां | करणां. |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| ४१० | २० | द्दान्त | द्वान्त |
| ४१० | २१ | शिपग्रते | विशिष्यते |
| ४१० | २२ | पृथिव्या | पृथिव्या: |
| ४११ | ६ | मूत्त | मुक्त |
| ४१३ | १३ | सात्म | मात्म |
| ४१८ | १७ | वाहु | बाहु |
| ४१६ | २ | वयेभ्य | कोभ्य |
| ४१७ | १ | प्यकी | त्रकी |
| ४१७ | २० | मदम् | मन्दम् |
| ४२० | ८ | मूय | भूय |
| ४२० | १६ | कारा | काशा |
| ४२२ | १६ | इत्यक्त | इत्युक्त |
| ४२३ | ३ | भूष | भूय |
| ४२३ | ४ | वरही | वरोही |
| ४२४ | ४ | वराहो | वरोहो |
| ४२४ | १६ | सप्तक्यल | सप्तपाताल |
| ४२८ | ४ | भवन्ति | भवति |
| ४३१ | ५ | ब्रह्मण | ब्रह्मणा: |
| ४३१ | १६ | नर्मा | निर्मा |
| ४३२ | २२ | भूयभा | भूयमा |
| ४३३ | २ | मिव्य | भिव्य |
| ४३४ | १ | व्यावी | ष्यावी |
| ४३५ | ८ | ववनी | वचनी |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| ४३६ | ११ | यो ऽत: | यो ऽन्त: |
| ४३६ | १४ | प्राणात्र | प्राणान |
| ४४६ | ७ | मूत | भूत |
| ४५० | ३ | सद्यां | सद्या |
| ४५४ | २१ | र्शन | र्शनं |
| ४५८ | ८ | तारातम्य | तारतम्य |
| ४६५ | १ | मवेम् | भवेत् |
| ४८५ | ६ | मात्मन | मात्मन: |
| ४८७ | २ | विधे | विधे |
| ४६२ | ६ | मनव्य | मन्तव्य |
| ४६२ | २२ | विदान् | विद्वान् |
| ४८३ | १६ | सुरछन्द | सुरच्छन्द |
| ४६३ | १७ | छन्दान्सि | छन्दांसि |
| ५०१ | १ | तत्व | तत्त्व |
| ५०३ | १३ | णोऽख | ब्रह्मणोरखण्डं |
| ५०४ | ७ | त्यंतर | त्यन्तर |
| ५०८ | ४ | इश्वर | ईश्वर |
| ५१८ | ७ | मत्वा | सत्त्वात् |
| ५१८ | ७ | सत्वा | ऽसत्त्वा |
| ५१६ | २ | सत्वे | एसत्त्वे |
| ५१६ | ३ | सत्वा | मत्त्वा |
| ५२१ | १६ | मत्वा | मत्त्वात् |
| ५२७ | १ | त्यादि | त्यादि. |

| पृ० | पं० | अ० | शु० |
| --- | --- | --- | --- |
| ५३७ | १३ | प्रव्र० | प्रव्रजन्ति |
| ५४२ | १७ | त्तणाह्रक | ह्रपक |
| ५४३ | ३ | र्थत्वं | र्थत्वं |
| ५५६ | ५ | वत्व | वत्त्व |
| ५५७ | ६ | यांश्र | याम |
| ५६५ | १३ | तं | क्षतमि |
| ५६५ | १८ | तात्वि | तात्त्विका |
| ५६८ | २ | स्यार्थं | सूत्रस्यार्थं |
| ५७३ | ४ | भव | भवन्तीति |
| ५७३ | १४ | साचात्सो | साचात्कारे |
| ५८० | २२ | प्यप्य | प्यस्य |
| ५८३ | ४ | यान्य | यान्यं |
| ५८७ | २१ | वित्व | वित्त्वं |
| ५६५ | २ | ष्ठ | वासिष्ठे |
| ६०५ | ५ | ह्त्य | साहित्य |
| ६०५ | ६ | ष्मिमु | ष्मिकमु |
| ६०७ | ३ | चते | परीच्यते |
| ६०८ | १७ | ङ्क्षया | काङ्क्षाया |
| ६१६ | ७ | विमुत्व | विभुत्व |
| ६१७ | २० | त्यय: | त्यर्थ: |

श्रीगणेशाय नमः ।

ॐ नमो नारायणाय ।

श्रीसरस्वत्यै नमः ।

# ब्रह्मसूत्रभाष्यम् ।

## विज्ञानामृताख्यम् ।

विज्ञानभिक्षुविरचितम् ।

---

सर्वत्र यो यत्र सर्वं यश्च सर्वमतो भवेत् ।
चिदचिच्छक्तये तस्मै नमश्चिन्मात्ररूपिणे ॥१॥
अन्तर्यामिगुरूद्दिष्टज्ञानविज्ञानभिक्षुणा ।
ब्रह्मसूत्रर्जुव्याख्या क्रियते गुरुदक्षिणा ॥२॥
श्रुतिस्मृतिन्यायवचःक्षीराब्धिमथनोद्धृतम् ।
ज्ञानामृतं गुरोः प्रीत्यै भूदेवेभ्यो नु दीयते ॥३॥
परिविषय्य मद्बुद्ध्या मोहिन्येवाथ दानवान् ।
कुतर्कान्वञ्चयित्वेदं पीयताममृतेप्सुभिः ॥४॥
पीत्वैतद्बलवन्तस्ते पाखण्डासुरयूथपान् ।
विजित्य ज्ञानकर्मभ्यां यान्तु श्रीमद्गुरोः पदम् ॥५॥

"ब्रह्मविदाप्नोति परम्" "ब्रह्म वेद ब्रह्मैव भवति" "तमेव विदित्वाऽतिमृत्युमेति" इत्यादिश्रुतिसिद्धपरमपुरुषार्थसाधनताके ब्रह्मज्ञाने विधिः श्रूयते "आत्मेत्येवोपासीत" "स म आत्मेति विद्यात्तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः" इत्यादिरूपः तत्र किं

ब्रह्म किं वा तस्य ब्रह्मतानिर्वाहकं गुणजातं कीदृशं वा तस्य ज्ञानं कीदृशं वा तस्य ज्ञानफलमित्यादिकं विशिष्य मुमुक्षूणां जिज्ञासितं भवति श्रुतिष्वापाततो ऽन्योन्यविरुद्धार्थतायाः शाखाभेदेन प्रतिभासनादिति अतस्तन्निर्णयाय ब्रह्ममीमांसाशास्त्रमपेक्षितम्। नन्वथातो धर्मजिज्ञासेत्यादिपूर्वमीमांसयैव ब्रह्मज्ञानरूपधर्मस्यापि मीमांसितत्वान्नास्ति पुनराकाङ्क्षा, ब्रह्मज्ञानस्य च धर्मत्वं चोदनालक्षणत्वात्सिद्धम् अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनमित्यादिस्मृतेश्च। वक्ष्यति चाचार्यः, सर्वासु वेदान्तविद्यासु चोदनां सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादितिसूत्रेण, तत्र कुतर्कजातस्य च पश्चान्निराकरिष्यमाणत्वादिति, मैवम्। सामान्यतो धर्मत्वादिना निरूपणेऽपि अशेषविशेषनिर्धारणार्थं कल्पसूत्रादिवद्ब्रह्ममीमांसाया अप्यपेक्षितत्वात्, ननु तथाऽपि "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्मेत्यादिश्रुतिसिद्धत्वाद्ब्रह्मस्वरूपे जिज्ञासा नोपपद्यतइति चेन्न। तदेव ज्ञानं किं सांख्ये सिद्धं जीवचैतन्यं, किं वा चैतन्यान्तरमित्येवंस्वरूपजिज्ञासासत्त्वादिति। तदेवमाकाङ्क्षितत्वाद्ब्रह्ममीमांसाशास्त्रस्यारम्भं प्रतिजानीते भगवान्वेदव्यासः—

## अथातो ब्रह्मजिज्ञासा ॥

अत्राथ शब्द उच्चारणमात्रेण मङ्गलरूपोऽधिकारवाचकः, अधिकारश्च प्रकरणं प्राधान्येन निरूपण

मिति यावत्, अतो ब्रह्मशेषतया ऽन्येषामपि मीमांसनमर्थाच्छिन्नं, तथा प्रत्यधिकरणं ब्रह्मशब्दाभावे ऽपि प्रकरणितया ब्रह्मैव लक्ष्यमित्यादिकमथशब्दस्य प्रयोजनम्, अत इत्यत्रेदमा प्रकृतं सूत्रमुच्यते, पञ्चमी चाऽवधौ, तथा च इदं सूत्रमारभ्येत्यर्थः, अर्थज्ञानात्प्रागेव सूत्रस्योपस्थितत्वान्न तत्परामर्शानुपपत्तिः वक्ष्यमाणस्यापीदमा परामर्शदर्शनात् उत्तरसूत्रमारभ्येत्यर्थस्त्वतिसमीचीनः, तथा च यथा ग्रन्थशेषे ऽनावृत्तिः शब्दादिति समग्रमूलद्विरावृत्तिः शास्त्रोत्तरावधिसूचिका, तथैवात इति शब्दोपि तत्पूर्वावधिवाचकः, एवं हि शास्त्रस्य पूर्वापरान्तद्वयावधारणे सति ग्रन्थमहावाक्यार्थबोधाय वाक्यान्तराकाङ्क्षयो शिष्याणां विलम्बो न भवतीत्याशयेन शास्त्रकृद्विराद्यन्तावधी परिच्छिद्येते, अवश्यं चाथातःशब्दयोर्यथोक्तार्थतैव शास्त्रान्तरेष्वभ्युपेया, यथा अथातो व्रतमीमांसेत्यादिश्रुतौ ।

अथातो गोभिलोक्तानामन्येषां चैव कर्मणाम् ।
असम्पृष्टानां[१] विधिं सम्यग्दर्शयिष्ये प्रदीपवदित्यादि ॥

स्मृतौ च, न हि तत्राधिकारावधी विहाया-ऽथातःशब्दयोरन्यार्थता सम्भवति । ब्रह्मणो ब्रह्मशब्दार्थस्य जिज्ञासा ब्रह्मजिज्ञासा अतो विशिष्य पूर्वं ब्रह्मज्ञानाभावे ऽपि शिष्याणां न सूत्रवाक्यार्थबोधासम्भवः, ब्राह्मणवेदहिरण्यगर्भादिषु ब्रह्मशब्दस्य

(१) कात्यायनकृतकर्मप्रदीपस्य प्रथमः श्लोकः ।

गौणत्वेन न ब्रह्मशब्दार्थतेति वक्ष्यामः। जिज्ञासा चात्र विचारो मीमांसापरनामकः। जिज्ञासाशब्दस्य मीमांसाशब्दवद्विचारे रूढत्वात्, अथातो धर्मजिज्ञासेत्याद्यनेकशास्त्रेषु जिज्ञासां प्रतिज्ञाय विचारकरणदर्शनात्। श्रुतावपि ब्रह्मज्ञानेच्छयोपसन्नं शिष्यं प्रत्यपि "तद्विजिज्ञासस्व तद्ब्रह्मेति" पुनर्जिज्ञासोपदेशाच्च। अत एव अजिज्ञासितसद्धर्मो गुरुं मुनिमुपव्रजेदित्यादिवाक्येषु विचारएव जिज्ञासाशब्दः प्रयुज्यमानो दृश्यते तत्रेच्छार्थकत्वासम्भवात्। तस्माद्योगेन रूढतया च प्रकरणभेदेन जिज्ञासाशब्दो विचारेच्छयोरुभयोरेव वाचक इति बोध्यम्, विचारस्य विवरणं निर्णयहेतुभूतं लिङ्गाद्यवधारणम्, निर्णयश्चोक्तो न्यायाचार्यैः, विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति। स च निर्णयो वेदान्तैरेवेति वक्ष्यति। शास्त्रयोनित्वादिति सूत्रेण॥ तथा चायं सूत्रार्थः इदं सूत्रमारभ्य प्राधान्येन ब्रह्मविचारः तच्छास्त्रमस्माभिः क्रियतइति॥ यदि च जिज्ञासाशब्देन तच्छास्त्रं न लक्ष्यते तदा आचार्येण पूर्वमेव ब्रह्मणो निर्णीतत्वाद्विचारप्रतिज्ञा नोपपद्यते। नोपपद्यते च विचारं प्रतिज्ञाय सूत्रपरम्परारचनमिति॥ आधुनिकास्तु प्रौढ्या सूत्रमिदमेवं व्याचक्षते अधीतस्वाध्यायैर्विचारितकर्मकाण्डैरप्यकर्तृत्वादिरूपेणात्मनो ऽनवधृतत्वात्तन्निर्धारणं चाविद्यानिवृत्त्या पुरुषार्थसिद्धेस्तन्निर्धारणायात्मनो ब्रह्मणो जिज्ञासा-

तदुपलक्षितो विचारः शिष्याणां कर्त्तव्यतया शास्त्रस्यादौ विधीयते अथातो ब्रह्मजिज्ञासेति। अथशब्दो नित्यानित्यवस्तुविवेकेहामुत्रफलभोगविरागशमदमादिसंपन्मुमुक्षुत्वरूपसाधनचतुष्टयानन्तर्यमाह। अथशब्दश्च वक्ष्यमाणहेतुवाचकः। ज्ञातुं साक्षात्कर्त्तुमिच्छा जिज्ञासा तद्धेतुको विचारः। तथा चायमर्थः। यस्मादग्निहोत्रादिकर्मानित्यफलकं ब्रह्मज्ञानं त्वानन्तफलकमतः सर्वकर्माणि संन्यस्य शमदमादिसाधनचतुष्टयसंपन्नेन विविदिषुणा ब्रह्मविचारः षड्विधलिङ्गैर्वेदान्ततात्पर्यावधारणरूपो ब्रह्मसाक्षात्काराय कर्त्तव्य इति॥ "तद्विजिज्ञासस्व तद्ब्रह्मेति श्रुतेः"। लिङ्गानि च पूर्वाचार्यैरुक्तानि।

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णयइति[1]॥

तथा च विचारविधिपरं सूत्रमिति वदन्ति। तत्रेदमुच्यते कथं पुनः सर्वतन्त्रसाधारणमपेक्षितं चोक्तार्थं हित्वा सामान्याभ्यामथातःशब्दाभ्यामेतादृशोऽर्थविशेषोऽवधारित इति। साधनाध्यायसूत्रेभ्य इति चेत् तर्ह्युत्तमत्र तत्सूत्रणेन एकाक्षरलाघवाह्याचार्याः पुत्रोत्सवं मन्यते न वा साधनाध्याये सर्वकर्मत्यागं वा विचाराङ्गत्वेन शमदमादीन्वा विधास्यति किं तु विद्याया अकर्मशेषतया पुरुषार्थहेतुत्वं प्रतिज्ञाय तत्साधकत्वेन समाधिनि-

(१) इति बृहद् वार्त्तिके।

ष्ठानां न्यायसिद्धं कामतः कर्मत्यागमनुवदति उ-पमर्दं चेति सूत्रेण तथा विद्याप्रधाने संन्यासाश्र-मे विधिं व्यवस्थापयिष्यति न सर्वकर्मत्यागे तथा संप्रज्ञातयोगजब्रह्मसाक्षात्काररूपायामेव विद्यायां फलपर्यवसायिन्यां शमदमाद्यन्तरङ्गसाधनं वक्ष्यति शमदमाद्युपेतस्य स्यात्तथापि तद्विधेस्तदङ्गतया तेषा-मवश्यानुष्ठेयत्वादिति सूत्रेण। "तस्मादेवंविच्छान्तो-दान्तउपरतस्तितिक्षुःसमाहितो भूत्वा आत्मन्येवा-त्मानं पश्यती" त्यादिश्रुतौ। संप्रज्ञातजसाक्षात्कारा-ङ्गतयैव शमदमादिविधानात्। नारदीये नित्यानित्य-विवेकादिसाधनचतुष्टयप्रतिपादनानन्तरं।

चतुर्भिः साधनैरेतैर्विशुद्धमतिरच्युतम्।
सर्वगं भावयेद्विप्राः सर्वभूतदयापर[१]॥

इति वाक्येन साधनचतुष्टयस्य ध्यानाङ्गताया एव लाभाच्च। तत्र च यदि अङ्गाङ्गतया बहिरङ्गैरग्नी-न्धनादिभिः कर्माङ्गैर्विक्षेपात् शमादिर्न संभवति तदा अन्तरङ्गानुरोधेन बाह्याङ्गान्यग्नीन्धनादीनि न-पेक्षणीयानीत्येव वक्ष्यति। अत एव चाग्नीन्धनाद्य-नपेक्षेति सूत्रेण। न तु कर्मत्यागं तेनापि सूत्रेण विधास्यति। तथा सति सर्वापेक्षा च यज्ञादिश्रुते-रश्ववत् सहकारित्वेन चेत्युत्तरसूत्रविरोधात्। कर्मा-नपेक्षेत्यस्यैव वक्तव्यतौचित्याच्च। नन्वेवमपि सूत्र-द्वयोक्तयोरग्न्याद्यपेक्षानपेक्षयोर्विरोध एवेति चेन्न।

(१) वृहन्नारदीयेअ० ३१ श्लो० ५४।

संन्यासिनां बाह्याग्न्याद्यभावेऽपि स्वसमारोपितानां बाह्याग्न्यादीनामन्तरग्निहोत्रकाले प्रेक्षणीयत्वेनाऽविरोधात्। तथा च विष्णुपुराणे संन्यासप्रकरणे।

कृत्वाग्निहोत्रं स्वशरीरसंस्थं
शारीरमग्निं स्वमुखे जुहोति।
विप्रस्तु भैक्ष्योपचितैर्हविर्भि-
श्चिताग्निना स व्रजति स्वलोकानिति[१] ॥
मोक्षधर्मे च संन्यासप्रकरणे।
प्रादेशमात्रे हृदि निश्रितं य-
त्तस्मिन्प्राणानात्मयाजी जुहोति।
तस्याग्निहोत्रं हुतमात्मसंस्थं
सर्वेषु लोकेषु सदैवतेषु ॥
उत्तानआस्येन हविर्जुहोति
लोकस्य नाभिर्जगतः प्रतिष्ठा।
तस्याङ्गमङ्गानि कृताकृतं च
वैश्वानरः सर्वमिदं प्रपेदइति[२] ॥

न्यायाचार्यैश्च समारोपणादात्मन्यप्रतिषेध इत्युक्तम्। अग्न्यादीनामात्मन्यारोपणात्कर्मणामप्रतिषेध इत्यर्थः। अत्र मोक्षधर्मवाक्ये ऽङ्गहानावप्यन्तर्यागो योगिनां न दुष्यतीत्युक्तम्। एतेन संन्यासिनां सर्वकर्मत्यागो ऽशास्त्रार्थः, तथा च श्रुतिरपि। "अत ऊर्ध्वममन्त्रवदाचरेदिति सर्वं समाधावात्मन्याच-

(१) अं० ३ अ० ७ श्लो० ३०.
(२) अ० २४५ श्लो० २७।

रेदिति च आत्मनि स्वशरीरे समाधिमात्रेण देवैः सह सन्धिं सन्ध्याख्यं कर्माचरेदित्यर्थः । तथा च श्रुत्यन्तरं परमात्मात्मनो रेकत्वे विज्ञानेन तयोर्भेद एव विभग्नः सांध्यम् संध्येति । तथा मनौ ।

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति[१] ॥

इत्यनेन ज्ञानस्यात्मयागेन सह समुच्चय उक्तः ॥ आत्मयागश्च स्वशरीरस्थानामेव सर्वदेवानां स्वकीयस्नानाहारादिकालेषु स्वभोगैरेव मन्त्रादिनैरपेक्ष्येण यजनम् ॥

एतानेके महायज्ञान्यज्ञशास्त्रविदो जनाः ।
अनीहमानाः सततमिन्द्रियेष्वेव जुह्वति ॥
आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम् ।
एवं सन्निवेशयेत्खेषु चेष्टनस्पर्शनेऽनिलम् ॥

इत्यादिमनुवाक्यान्तरात् । तस्य चात्मयागस्य मनोमात्रसाध्यत्वमाह वसिष्ठः वैदिकं कर्म प्रकृत्य ।

बाह्यमाभ्यन्तरं चेति प्रत्येकं मुक्तिसाधनम् ।
बाह्यं बहिःक्रियाभिश्च यत्तद्विहितसाधनैः ॥
आभ्यन्तरं तु मनसा विध्यनुष्ठानमात्मनि ।
तयोरन्यतरत्कुर्यान्नित्यं कर्म यथाविधि ॥

मोक्षधर्मे च ।

शान्तियज्ञरतो नित्यं ब्रह्मयज्ञरतो मुनिः ।

---

(१) अ० १२ श्लो० ९१ ।

वाङ्मनःका[१]ययज्ञैश्चभविष्याम्युरगायन इति[१] ॥

गौतमीयतन्त्रे च ।

केवलं सततं श्रीमच्चरणाम्भोजभाजिनां ।
संन्यासिनां मुमुक्षूणां मानसः कथितो विधिः ॥

इत्युक्तम् ॥ केवलमित्यनेन बाह्यकर्मणामेव त्यागो लब्धः । मानसकर्मविधानात् । वसिष्ठेनात्मयागस्य प्रशंसा च कृता ।

यष्टुमात्मन्यशक्तश्चेद्यजेद्बाह्येषु सर्वदा ।
स्वयमुत्पन्नलिङ्गे वा स्थापिते वा विशेषतः ॥

इत्यात्मयागाशक्तावेव बाह्यस्यावश्यकत्वमित्यर्थः । एवं च सति संन्यासिनामप्यन्तरग्निहोत्रं गायत्र्यर्थब्रह्मात्मताध्यानरूपसंध्यादिकं वास्तीति न "यावज्जीवमग्निहोत्रं जुहोतीत्यादिश्रुतिविरोधः । तथा

नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः ॥
कर्मणां नियतानां तु त्यागो नैव विधीयते ।
तेषां कर्मफलत्यागः संन्यास इति चोच्यते ॥

इत्येवंविधवाक्यान्यपि संन्यासविधिना न विरुध्यन्तइति मन्तव्यं । मोहादकर्त्तव्यताज्ञानात् कर्मत्यागस्य वैधत्वे तु तत्तच्छ्रुतिस्मृतयः संकुच्येरन् । असंकोचेनोपपत्तौ संकोचश्चान्याय्यो वैधस्य रात्रिश्रा-

(१) कर्मयज्ञैश्चेतिपुस्तकान्तरपाठः ।
(२) अ० १७५ श्लो० ३२ ।

इस्येव प्रतिषेधानुपपत्तिश्च । प्राप्ताप्राप्तविकल्पग्रासात् पर्य्युदासाश्रयणे च रात्रौ श्राद्धं न कुर्वीतेत्यादाविव कर्मत्यागवाक्येष्वपि लक्षणाभ्युपगमेन गौरवात्कर्मत्यागवाक्यानामस्य उपदर्शितविकल्पाद्यनुसारेण बाह्यकर्मत्यागपरत्वस्यैवौचित्याच्च । एतेन,

सर्वाणि भूतानिसुखे रमन्ते
सर्वाणि दुःखेषु तथोद्विजन्ति ।
तेषां भयोत्पादनजातखेदः
कुर्यान्न कर्माणि हि जातवेद[१] ॥

इत्यादीनि जातवेदानां विदुषां कर्मत्यागविधायकवाक्यानि बाह्यकर्मत्यागपराण्येवावगन्तव्यानि ।

"आत्मक्रीडा आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठ इत्यादिश्रुतिभि"रात्मारामस्यापि विदुषः कर्मावगमात् ।

ज्ञानिना ऽज्ञानिना वापि यावद्देहस्य धारणं ।
तावद्वर्णाश्रमप्रोक्तं कर्त्तव्यं कर्म मुक्तये ॥
ज्ञानेनैव सहैतानि नित्यकर्माणि कुर्वतः ।
निष्टत्तफलदहस्य मुक्तिस्तस्यकरे स्थिता ॥ इति

वसिष्ठकौर्मादिस्मृतिभिर्विदुषोऽपि कर्मावश्यकत्वस्मरणाच्च । तथा कर्मत्यागहेतोर्हिंसाविक्षेपादेरान्तरकर्मण्यसम्भवाच्च । संन्यासिनां कर्माभावे स्वशरीरे

(१) महाभारतमोक्षपर्वणि अ० २४४ । श्लो० २५ ।

ऽग्न्यादीनां देवादिनां वारोपणस्य वैफल्यापत्तेश्च ॥ ननु भवतामप्यारोपणमदृष्टार्थमेवाऽग्न्यादीनां देहे सत्त्वादिति चेन्न। बाह्याग्निसूर्याद्याधारकोपासनाप-रित्यागजदोषपरीहारस्यैव बाह्याग्न्याद्यारोपफल-त्वात् एवं ह्यन्तरेव ‘समष्टिव्यष्ट्यभेदेन’ सर्वदेवानां बाह्ययागोपि संपद्यतइति। एवमन्यान्यपि वाक्या-नि “किमर्था वयं यक्ष्यामहे” “अग्निहोत्रं न जु-हवांचक्रिरे”।

तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः।
यदिदं वेदवचनं कुरु कर्म त्यजेति च ॥

इत्येवमादीनि विदुषां हिंसाविक्षेपादिदोषदुष्टबा-ह्यकर्मत्यागविधायकान्येव न त्वावश्यकभिक्षादावप्यन्त-र्यागस्य नमस्कारजपादेर्वा प्रतिषेधकानि। कर्मत्याग-स्य शमादिपालनाय गुणलोपो न गुणिन इति न्याये-न दृष्टार्थकत्वात्। अत एव,

ऋतुं प्राप्य यथा वृक्षः पत्रं त्यजति निस्पृहः।
तत्वं प्राप्य तथा योगी त्यजेत्कर्मपरिग्रहम् ॥

इत्यादिस्मृतिष्वपि कर्मपरिग्रहस्य कर्मोपकरणस्यैव त्यागोऽवगम्यते। अन्यथा त्यजेत्कर्मेत्येव वक्तुमौचित्यात् प्रणवजपे च शिखायज्ञोपवीताद्यभावेप्यधिकारो ऽस्ति तापनीयेऽशिखा अयज्ञोपवीता इति परमहंसं प्रकृत्य प्रणवे एव पर्य्यवसिता इति श्रवणात्। यत्तु

(१) अर्थपाठः पुस्तकान्तरेनास्ति।

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥
न केवलेन योगेन प्राप्यते परमं पदम् ।
ज्ञानं तु केवलं सम्यगपवर्गफलप्रदम् ।

इति भगवद्गीताकूर्मयोर्वाक्यं तन्निष्पन्नसमाधियोगिपरं । तेषां बाह्यसंवेदनाभावेन कर्मसामान्याभावोऽदोषात् ॥ तदुक्तं गीतायां ।

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।

इति तस्मात्स्वयमुद्भवत्समाधिं परित्यज्यान्तरमपि कर्म न कर्त्तव्यं प्रधानानुरोधेन गुणत्यागस्य न्यायसिद्धत्वात् । अत एवानेकसंवत्सरं व्याप्यापि बाह्याभ्यन्तरसर्वकर्मपरित्यागेन समाधाववस्थानं परमर्षीणां श्रूयतइति । तदपि च व्युत्थानकाले यथाशक्ति भिक्षादावन्तर्यागादिः क्रियतएवेति ।

यत्तु यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः ।
आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान्[१] ॥१॥

इति मनुवाक्यं तदशक्तपरं बोध्यम् । तत्र हि कर्मत्यागो न विधीयते । किन्तु रोगाद्यशक्त्या कर्माभावे प्रसक्ते विद्वान्नात्मज्ञानादितत्परो भवेदित्येव विधीयते, केचित्तु

लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥

(१) अ० १२ श्लो० ९२ ।

इत्यादिवाक्येभ्यो विद्वदविद्वद्विषयभेदेन कर्मत्यागकर्मणो व्यवस्थेति वदन्ति । तन्न । उत्पन्नज्ञानस्यापि कर्मविधिश्रवणेन ज्ञानयोगशब्दस्य समाधिवाचकत्वात् । तथा च एकाग्रतालक्षणाज्ज्ञानयोगेन समाध्याख्येन सांख्यानां विवेकाभ्यासिनां निष्ठा ज्ञाननिष्पत्तिः । कर्मयोगेन तु योगिनां योगाभ्यासिनां निष्ठा योगारूढता भवतीत्यर्थः ॥

तथा चोक्तं गीतायामेव ॥

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यतइति ॥

नन्वेवं कर्मत्यागस्याविधेयत्वे विधिर्वा धारणावदिति साधनाध्यायस्थसूत्रेण किं विधेयमुक्तमिति चेत् । संन्यासाश्रम इत्यवेहि । कः पुनरयं संन्यास शब्दार्थः, उच्यते ।

आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहाद् इतिमन्वादिवाक्योक्तः स्वशरीरे अग्न्याद्यारोपणपूर्वकः पुत्रगृहाद्यभिमानत्यागेन गृहात्प्रव्रजनरूप आश्रम इति । अपरस्तु केवलकर्माभिमानकर्मफलत्यागादिः कुर्यात्कर्मसंन्यासचिन्तनं ।

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुरित्यादियाज्ञवल्क्यगीतादुक्तो गौणसंन्यासएव नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छतीति गीतावाक्येन कर्मफलं संन्यासफलस्य नैष्कर्म्यसिद्धिरूपस्य म-

न्वादुक्तसंन्यासाश्रमस्य पूर्वोक्तफलसंन्यासापेक्षया परमत्ववचनादिति । नैष्कर्म्यशब्दश्च अनुगीतादौ संन्यासविशेषवाची दृष्टो यथा,

अभयं सर्वभूतेभ्यो दत्वा नैष्कर्म्यमाचरेत् ।
सर्वभूतसमो मैत्रः सर्वेन्द्रिययतो मुनिः[१] ॥

इतिकर्माभिमानतत्फलत्यागयोश्च गौणसंन्यासत्वेपि मुख्यकल्पत्वं मन्तव्यं ।

तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यतइति गीतावाक्ये अभिमानफलत्यागपूर्वकस्य कर्मयोगस्यैव सर्वकर्मत्यागापेक्षया श्रेष्ठत्ववचनात् । समाधिप्रयुक्ताऽशक्त्या रोगदारिद्र्याद्यशक्त्या चैव हि बाह्यकर्मत्यागसिद्धिरिति । अत एव श्रुतिः "आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठ" इति । अत एव जनकादिषु वसिष्ठादिषु च ज्ञानकर्मसमुच्चय एव दृश्यतइति । अधिकं तु साधनाध्याये वक्ष्यामः । तस्मात् श्रवणार्थमविदुषां सर्वकर्मत्यागो बाह्यकर्मत्यागो वा शक्तानां न शास्त्रार्थः । आतुरस्य तु बाह्यकर्माशक्तस्यान्तरकर्मानुष्ठानपूर्वकं जाबालोक्तसंन्यासं नैव निराकुर्मः ।

अकर्त्तुमसमर्थश्चेज्जुहोतियजतिक्रियाः ।
अन्धःपङ्गुर्दरिद्रो वा विरक्तः संन्यसेद्द्विजः[२] ॥

इति कूर्मवाक्यादिति । यत्र श्रौतोऽयं विविदिषूणामपि सर्वकर्मसंन्यासः ।

---

(१) अश्वमेधपर्वणि अ० ४५ ।
(२) कौर्मे अ० ३ श्लो० १० ।

"परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं तस्मै सविद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यामिति श्रुतेः, अत्र गुरुमेवेत्येवकारादिभिः सर्वकर्मत्यागावगमादिति तन्न एवकारादगुरुभावेनोपगमव्यावृत्तेरेव लाभान्न तु कर्मव्यावृत्तेः। "क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठा स्वयं जुह्वन्तएकर्षिं श्रद्धयन्तः तेषामेवैतां ब्रह्मविद्यां वदेदिति" वाक्यशेषे क्रियावतामेवोपदेश्यत्वविधानात्। समित्पाणित्वलिङ्गेन होमावगमाच्च। समित्पाणिशब्दस्योपहारपाण्यर्थकत्वोपवर्णनं तु स्वाऽज्ञानवर्णनमेव। नास्त्यकृतःकृतेनेत्यनेन च कर्मणां मोक्षसाधनत्वमेव निराकृतं फलवत्सन्निधावफलस्यैवाङ्गत्वेन तस्यमोक्षाऽसाधनत्वात्। न तु कर्मत्यागो विहित इति। प्रशान्तचित्तायेत्यनेनापि विद्याग्रहणोपयोग्येव प्रशम उक्तः न तु कर्मत्यागः। अर्जुनादिकर्मिभ्योऽपि ब्रह्मविद्योपदेशदर्शनादिति। तथा "न कर्मणा न प्रजया न धनेनेत्यादि श्रुतिरपि कर्मादीनामङ्गानामभावेपि एकेषां जडभरतादीनां मोक्षमेवानुवदति। न तु कर्मत्यागं विदधाति। या च पुत्रैषणादित्यागश्रुतिः साऽपि पुत्रादीच्छानामेव त्यागं विदधाति न तु कर्मणः।

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज।

उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज[1] ॥

इतिश्रुतिश्च धर्मादेस्तत्त्यागहेतुविवेकख्यातेश्च रागद्वेषादित्यागं विदधाति।

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च कर्त्तव्यानीत्यादि गीताद्येकवाक्यत्वात्। अन्यथाजीवतां धर्माधर्मादित्यागासम्भवात्। मूत्रोत्सर्गादावप्यन्ततः पिपीलिकादीनां विनाशात्।

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते॥

इति गीतावाक्यादिति। "तस्माद् विद्यां चाविद्यां च यस्तद्वेदोभयं सहेत्यादि परब्रह्मप्रकरणस्थवाक्यविरोधात्सर्वकर्माणि सन्न्यस्य श्रवणं कुर्यादित्याधुनिकानां विधिकल्पनं कुकल्पनमेवेति द्रष्टव्यम्। अत एव श्रवणानन्तरमेव मनुना संन्यासाश्रमो विहितः। वेदान्तान्विधिवत् श्रुत्वा संन्यसेदनृणो द्विज इति॥ तस्मात्संन्यस्य श्रवणं कुर्यादित्यस्यायमेवार्थोऽज्ञस्याऽशक्त्या बाह्यकर्मत्यागरूपं संन्यासे सति श्रवणमवश्यं कर्तव्यमिति। ज्ञानकर्मसमुच्चये चायं विशेषः।

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते॥

इत्यादि वाक्यानुसारेणावगन्तव्यः। आरुरुक्षुत्वेनोत्सर्गतो ब्रह्मचारिगृहस्थयोः कर्माधिक्येनाऽनुष्ठेयं ज्ञानं तु तदुपसर्जनं युज्यमानस्य तथा च वानप्र-

(१) मोक्षपर्वणि अ० ३७२ श्लो० ४०।

स्यस्योभे एव समे समुचिते योगारूढतया तु परिव्राजकस्य ज्ञानं प्रधानम्। आन्तरं कर्म तदुपसर्जनमिति। एतेषु प्रकारेषूत्तरोत्तरमायासबाहुल्याद्धिंमादिदोषह्रासाच्च मोक्षाख्यफलेऽप्याश्वाऽशुतरादिरूपेण विशेषो मन्तव्यः॥

जन्मान्तरैरभ्यसतो मुक्तिः पूर्वस्य जायते।
विनिष्पन्नसमाधिस्तु मुक्तिस्तत्रैव जन्मनि[१]॥

प्राप्नोतीति विष्णुपुराणादिति। पूर्वस्य पूर्वोक्तस्य युज्यमानस्येत्यर्थः। यथोक्तव्यवस्थया च प्रत्येकप्राधान्यसमसमुच्चयबोधकवाक्यानां पूर्वोत्तरमीमांसयोश्चाविरोध इति प्रत्येकप्राधान्यसमुच्चयवाक्यं च यथा मोक्षधर्मे॥

ज्ञाननिष्ठां वदन्त्येके मोक्षशास्त्रविदो जनाः।
कर्मनिष्ठां वदन्त्यन्ये यतयः सूक्ष्मदर्शिनः॥
प्रहायोभयमप्येतज्ज्ञानं कर्म च केवलं।
तृतीयेयं समाख्याता निष्ठा पञ्चशिखेन मे॥
तेनाहं सांख्यमुख्येन सुदृष्टार्थेन तत्त्वतः।
आवितस्त्रिविधं मोक्षं न च राज्यादिचालितः[२]॥

इति जनकेनोक्तं। तत्र कर्मप्राधान्यसमसमुच्चयज्ञानप्राधान्यानां फलरूपं त्रिविधं मोक्षं क्रमेणाह तत्त्वसमासाख्यसांख्यस्य भाष्ये पञ्चशिखाचार्यः।

---

(१) अं० ६ अ० ७ श्लो० ३३।
(२) अ० ३२० श्लो०। ३८। ४०। ३७।

आदौ तु मोक्षो ज्ञानेन द्वितीयो रागसंक्षयात् ।
कृच्छ्रक्षयात्तृतीयस्तु व्याख्यातं मोक्षलक्षणम् ॥

इति कृच्छ्रक्षय आत्यन्तिकदुःखाभावः । इदानीं समाधिरहितस्यापि विविदिषुतामात्रेण सर्वकर्मत्यागे परोक्तकुतर्का अपि परिक्रियन्ते । ननु श्रुतिस्मृतीनां कर्मत्यागाऽविधायकत्वे ऽपि । ज्ञानिनामर्थादेव कर्मत्यागो लभ्यते ज्ञानकर्मणो रेकदाविरोधादिति मैवम्, यदि ज्ञानशब्देन समाधिरुच्यते तदा एकदा विरोधे ऽपि व्युत्थानदशायां भिक्षाटनादात्मयागसम्भवात्कालाद्यङ्गहानावपि योगिनामदोषस्योक्तत्वात् । यदि पुनर्ज्ञानशब्देनानुभवमात्रमुच्यते तदा तेन सहकर्माभिमानस्यैव विरोधान्नतु कर्मणः । जडभरतादीनां भिक्षाटनादेर्भवतामप्यभ्युपगमात्कुर्याद्विद्वांस्तथाऽशक्तश्चिकीर्षुर्लोकसंग्रहमित्यादिवाक्यैर्वैदिककर्मणामपि विदुषि विधानाच्च । न चाऽभिमानाद्यभावेन ज्ञानिनां कर्मनिष्फलमेवेति तत्त्याग एवोचित इति वाच्यम् ।

उत्सिदेयुरिमे लोका न कुर्यां कर्मचेदहं ।
सङ्करस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः ॥

इत्यादिवाक्यतो लोकविनाशनजप्रत्यवायान्नुत्यत्तेरेव फलत्वसिद्धेः, योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धय इत्यादिवाक्यैः सत्त्वशुद्ध्याख्यपापक्षयहेतुतयैवाभिमानाख्यसङ्गशून्यकर्मणां साफल्याच्च । अन्यथा पापजन्यरोगादिना शरीरनाशादिभिर्ज्ञानपरिपाके

प्रारब्धक्षयैव प्रतिबन्धसम्भवात्कृतनियमभङ्गनादान-र्थक्यमिति सांख्यसूत्रादिभ्यः आनर्थक्यं ज्ञानस्येति प्र-कृतत्वाल्लभ्यते । नन्वविद्याया अदृष्टहेतुत्वादविद्या-निवृत्तौ पापोत्पत्तिरेव न सम्भवतीति कुतो मोक्षप्र-तिबन्धशङ्केति चेन्न, ज्ञानिभ्यो ऽपि कर्मविधानाद्वृथा-कर्मत्यागजपापातिरिक्ताद्दृष्टेष्वेवाऽविद्याया हेतुत्वाव-धारणात् अत एवाऽप्रायणात्तथाहि दृष्टमिति सूत्रेण मरणपर्यन्तमेवाऽशुभविनोऽपिविद्यावृत्तिं वच्यति प्रति-बन्धनिरासार्थमिति । अतो ऽपि चाऽनिर्दिष्टकालवि-शेषाणां ज्ञानाङ्गकर्मणां ज्ञानकालिकतया मरणप-र्यन्तता लभ्यत इति । ननु अभिमानाभावेना ऽत्मनि नियोज्यत्वप्रत्ययासम्भवाद्विदुषां विद्या किंकरता न सम्भवतीति चेन्न । अभिमानाभावे ऽप्युपाधौ नियो-ज्यत्वप्रत्ययसम्भवात् । अन्यथा भिक्षादावपि नियो-ज्यत्वप्रत्ययो न स्यात् । स्यादेतत्प्रवृत्तौ स्वीयसुखादि-साधनताज्ञानं कारणं । परसुखादिषु तत्साधने वा हानोपादानादर्शनात् । तथा च सुखादीनामनात्म-धर्मतया तेषु स्वीयत्वज्ञानाऽसम्भवात्कथं तत्साधने कर्मादौ विदुषां प्रवृत्तिः स्यादिति । उच्यते सांख्या-दिभिः स्वभोग्यत्वमेव धनादिष्विव सुखदुःखयोरपि स्वीयत्वमुच्यते । न तु नैय्यायिकादिवत्स्वसमवेतत्वं स्वभोग्यत्वं च स्वसाक्ष्यत्वं । साक्ष्यत्वं चोपाधिवृत्ति-विषयत्वं विना भास्यत्वमतो न योगिनां परमेश्वर-स्य वा परसुखादिषु स्वीयत्वम् । एतेन ज्ञानिनां स्व-

कृतिसाध्यतादिज्ञानमप्युपपादितं । स्वोपाधिकृतावपि साच्यतद्रूपस्वीयत्वसंभवात्संस्कारादौ धनादौ च स्वीयसुखादिसाधनत्वात्स्वीयत्वं । नन्वेवं नाहं सुखीत्यादिविवेको नोपपद्यतेति चेन्न । समवायसम्बन्धेनाहंसुखीत्यादिप्रत्ययस्यैवाविद्यात्वेन समवायसंबन्धावच्छिन्नतदभावप्रत्ययस्यैव विवेकशब्दार्थत्वात् । अविकारित्वेनैव शास्त्रेषु बुध्यादिभ्य आत्मनो विवेचनाच्चेति । तस्माद्विदुषामपि स्वीयसुखादिसाधनताज्ञानं स्वोपाधिप्रवृत्तेर्हेतुः सम्भवत्येव । अथ तथाऽपि आत्मतृप्ततया ज्ञानिनां सुखादाविच्छैव नास्तीति चेन्न, रागरूपाया अविद्याजन्येच्छाया एव ज्ञानिनां शास्त्रेषु प्रतिषेधात् । दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग इति न्यायसूत्रादिभिः । न तु लीलारूपादीच्छा प्रतिषिद्धा भिक्षादिदर्शनविरोधात् । ननु तथा ऽपि देहेन्द्रियादिभिः सम्बन्धाभावाद्विदुषां कथं प्रवृत्तिः । नह्यसङ्गस्यात्मनो देहादिभिः स्वाभिमानातिरिक्तः सम्बन्धः सम्भवतीति चेन्न, विदुषां ज्ञानोपपत्त्यर्थम् असङ्गवाक्यैर्लेपाख्यस्य विकारहेतुसंयोगस्यैव निषेधान्नतुपुष्करपत्रे जलस्येवासङ्गे ऽपिचेतने स्वोपाधेः संयोगविशेषः प्रतिषिध्यते । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण इतिश्रुतेः । स च संयोगविशेषः प्रारब्धकर्मक्षयादेव नश्यतीति सर्वैरेवाऽभ्युपेयम् । अन्यथा ज्ञानाद्यनुपपत्तेरिति । विषयैः प्रतिबिम्बरूपश्च बन्धस्था

ऽपि च ज्ञानिसाधारण्याद्विषयभोगो ऽपि ज्ञानिनामुपपन्नः। स्वप्रतिबिम्बितस्योपाधिसुखस्य भानमेवभोग इति वच्यमाणत्त्वा 'न्न च सति मूले तद्विपाको जात्यायुर्भोगा इति पातंजलसूत्रेण क्लेशसत्त्व एव कर्मविपाको भवतीति वचनात्कथं विदुषां भोगः स्यादितिवाच्यं। क्लेशाभावे कर्म विपाकारम्भीन भवतीति तत्सूत्रभाष्यतो विपाकारम्भे क्लेश हेतुताया एव तत्सूत्रार्थत्वात् ज्ञानिना च प्रारब्धविपाकमेव भुज्यत इति[१]। येत्वभिमानमेव बुध्यात्मनोः संबन्धं मन्यन्ते तेषामेव ज्ञानेन सवासनाज्ञाननिवृत्त्या विदुषां भोगाऽनुपपत्तिः। ज्ञानपरिपाकोत्तरमपि यावद्देहपातमविद्यालेशस्वीकारे च स लेशो न नश्येतैव देहारम्भककर्मनाशस्य वासनानाशकत्वे प्रमाणाभावात्। अविदुषोपि पुनर्जन्माऽसम्भवाच्च स्वयं विनाशि कदाचित् ज्ञानं विना ऽपि मुक्तिः स्यात्।[•] अज्ञानज्ञानयोर्नाश्यनाशकभावे व्यभिचारप्रसङ्गाच्च। कार्यतावच्छेदकविशेषस्य च दुर्वचत्वात्। किं च बुध्यात्मनोरध्यासरूपः संबन्धः, किमहंकरोमीत्यादिविशिष्टबुद्धिनियामकतया कल्प्यते, किं वा बुद्धि प्रवृत्तिनियामकतया नाद्यः, अहं करोमीत्यादिप्रतीतेः सम्बन्धविधया स्वविषयत्वे कर्मकर्तृविरोधात्। स्वजनकत्वे तु आत्माश्रयात्। अधिकाधिकाङ्गीकारे चान्योन्याश्रयचक्रकाऽनवस्थादिप्रसङ्गात्, अहंकर्तेत्यादिविशिष्ट-

---

(१) प्रथमाङ्कमारभ्य 'प्रथमाङ्कान्तो पाठः २०.पृ० नाः।

बुद्धिविवेकज्ञानाऽनाश्यत्वप्रसङ्गाच्च । मिथ्याज्ञानरूपसम्बन्धस्य समवायादिवत् पारमार्थिकत्वादिति । न द्वितीयः ईश्वरस्याऽज्ञानाभावेनोपाधिसंबन्धाभावप्रसक्त्या तस्य विश्वनिर्मातृत्वानुपपत्तिः ननु प्रपञ्चदर्शनानुपपत्त्येश्वरस्याप्यगत्या बाधितार्थाभिमान आहार्यज्ञानरूपः कल्पनीय इति चेन्न । चेतनेप्रतिबिम्बितस्यैव विषयभानहेतुतायाः वक्ष्यमाणत्वात् नत्वज्ञानस्य । अन्यथेश्वरस्य क्लेशकर्मादिशून्यताप्रतिपादकश्रुतिस्मृतिविरोधापत्तेः । नन्वेवमप्यसत्प्रपञ्चाकाराद्वृतिरेवेश्वरोपाधावज्ञानंस्यादेवेति चेन्न, प्रपञ्चस्या ऽत्यन्ततुच्छतायाः निराकरिष्यमाणत्वात्तस्माल्किमर्थमभिमानस्य संबंधत्वमितिनविद्मः । अत आत्माऽनात्मनोः परस्परप्रतिबिम्बो ज्ञाननियामकः संबन्धः । बुद्धेः प्रवृत्तिहेतुस्तु पद्मपत्रजलयोरिव संयोगविशेषःसंबन्धः ।

यथा काशस्थितो नित्यं वायुः सर्वत्र गो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥

इत्यादिवाक्यैर्लेपसङ्गादिनियामकस्य स्वाश्रयविकारहेतोः संयोगविशेषस्यैव प्रतिषेधावगमादिति । [1]आत्माऽनात्मनोरभेदबुद्धिस्तुभ्रमएवेति न तदर्थसंबन्धापेक्षेति[1] । स्यादेतत् । ज्ञानेन शुक्तिरजतवत्प्रपञ्चस्य बाधे किं गोचरा किमर्था वा प्रवृत्तिः स्यात् न हि सुप्तोत्थितस्य स्वप्नविषयगोचराप्रवृत्तिर्दृश्यते. तस्माद-

(१) अङ्कित पाठः २ पु० ना० ।

विद्यावद्विषयाण्येव सर्वाणि प्रमाणानि शास्त्राणि प्रवृत्तिनिवृत्त्यादयश्चेति। अत्रोच्यते। ईश्वरस्य ज्ञानिनां च प्रवृत्तिभोगादिश्रवणादेव शुक्तिरजतादिविलक्षणव्यावहारिकसत्ताकार्याणामभ्युपगम्यते।

सद्भाव एषो भवते मयोक्तो
ज्ञानं यथा सत्यमसत्यमन्यत्।
एतच्च यत्संव्यवहारभूतं
तत्रापि चोक्तं भुवनाश्रितं ते[१]॥

इति विष्णुपुराणादिषु सदसद्रूपत्वमेव च व्यावहारिकसत्त्वं। प्रकृतितत्कार्यसाधारणम्। एकधर्मेण सत्तादशायामपि विकारिपदार्थानां धर्मान्तरेण सदैवासत्तानियमात्। कूटस्थनित्यस्य चात्मनो नास्ति धर्मतोऽप्यसत्त्वमिति स एव परमार्थसन्निति शास्त्रमर्यादा तथा चोक्ता ऽसत्तावधारणमेव बाधः, स च न प्रवृत्त्यादिविरोधी तस्य विवेकवैराग्यमात्रहेतुत्वादिति वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादि श्रुतिरपि दृष्टान्तमुखेनेदृशे एव सत्त्वासत्त्वे ब्रह्मविकारयोः प्रतिपादयति। तस्यास्त्वयमर्थः यतः प्रलये च ब्रह्मणि सर्वं विकारजातमव्याकृतरूपामसत्तां गच्छति अतो वाचानां कार्यो नाममात्रशेषश्चत्यसत्यो भङ्गुरो विकारः कारणं ब्रह्मैव सत्यं। नित्यमिति अतीतानागतावस्थयोः कार्याणां नाममात्रे-

(१) अं० २ अ० १२. श्लो० ४५।

णावशेषता तु नामैवैनं जहातीति श्रवणात् । ननु नामधेयशब्दस्यात्यन्ततुच्छत्वमर्थः स्वविकारस्य तुच्छता अतशःसाधितत्वेन दृष्टान्तत्वासंभवात् पञ्चसमत्वात् अपागादग्नेरग्नित्वमितिवाक्यशेषे विनाशमात्रश्रवणाच्चेति स्वयमूह्यं ।

सत्ता सर्वपदार्थानां नान्या संवेदनादृते ।
भूतं च सिद्धं च परेण यद्यत्-
देव तत्स्यादिति मे मनीषा ॥

इत्यादि वाक्यानि चानुभवकारणाभ्यां विभागेनानुभूयमानकार्ययोरसत्त्वमेव बोधयन्ति । न तु तयोरत्यन्तासत्त्वमेव । तथा सति ते नस्त इत्येवोच्येत न तु ताभ्यां सह तयोरभेद इति । सदसतोरभेदायोगात् । एवमेवाऽन्या अप्येवं विधाः श्रुतिस्मृतयो व्याख्येया इति । अपि च भवतु ज्ञानकर्मणोर्यथा कथंचिद्विरोधस्तथाऽपि विविदिषूणां सर्वकर्मत्यागोऽनुचित एव विचारेण सह कर्मणां विरोधस्य भवतामप्यनभ्युपगमात् तदानीमभिमानस्य सत्त्वात् प्रत्युताऽनुत्पन्नज्ञानस्य सत्यां शक्तौ देवताराधनरूपबाह्याभ्यन्तरसर्वकर्मत्यागे ज्ञानमेव नोत्पद्येत देवकृतविघ्नसम्भवात् । "तदेतद्देवानां न प्रियं यदेतन्मनुष्याविदुरिति श्रुतेः । ननु विविदिषन्ति यज्ञेन दानेनेत्यादिवाक्याज्जिज्ञासाद्वारैव ज्ञाने कर्मणामुपयोग इति जिज्ञासानन्तरमेव तत् त्याज्यमिति चेन्न । तेन वाक्येन यज्ञादीनां ज्ञानसाधनत्वस्यैवावगमात् ।! नत्विच्छा

साधनत्वस्य । सर्वत्रैव नामधातुस्थले मूलधात्वर्थेन सहैव कारकाणामन्वयव्युत्पत्तेः । अन्यथा रथेन जिगमिषतीत्यादौ रथादीनामिच्छासाधनत्वप्रतीतिप्रसङ्गात् । न चैवं संभवति । न च ।

कषायपक्तिः कर्माणि ज्ञानं च परमागतिः ।
कषाये कर्मभिः पक्वे* ततो ज्ञानं प्रवर्तते[१] ॥
पापक्षयाच्छुद्धमतिर्वाञ्छति ज्ञानमुत्तमम् ॥

इत्यादिवाक्येभ्यो वैराग्यजिज्ञासाद्वारैव कर्मणां ज्ञानाङ्गत्वमवसीयतइति वाच्यम् । तथाविधवाक्यानां वैराग्यजिज्ञासाद्वारपरत्वे ऽपि द्वाराऽन्तराप्रतिषेधकत्वात् ।

कर्मणा सहिताज्ज्ञानात्सम्यग्योगो ऽभिजायते ।
ज्ञानं च कर्मसहितं जायते दोषवर्जितम्[२] ॥

इति कौर्मादिवाक्यैर्जिज्ञासोत्तरं जाते ऽपि ज्ञाने सम्यक् योगाख्यसंप्रज्ञातसमाधौ ज्ञाननिर्दोषत्वे च ज्ञानाभ्याससहभावेन कर्मोपयोगश्रवणात् । दोषाः रागद्वेषमोहाः पापानि च तथा ।

ज्ञानमुत्पद्यते पुंसः क्षयात्पापस्य कर्मणः[३] ।
यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥

---

* रसज्ञाने च तिष्ठतीति पाठः भारते दृश्यते ।
( १ ) महाभारते मोक्षपर्वणि अ० २६४ ।
( २ ) अ० ३ श्लो० २३ ।
( ३ ) महाभारते मोक्षपर्वणि अ० २०४ श्लो० ८ ।

इत्यादिवाक्यैर्ज्ञानप्रतिबन्धकपापक्षयद्वारा ऽपि कर्मणां ज्ञानहेतुत्वं बोध्यते । तथा कर्माणीश्वरतुष्टयर्थं कुर्यान्नैष्कर्म्यं येन प्राप्नुयादिति[1] वसिष्ठवाक्यान्नैष्कर्म्याख्यसमाधिहेतुत्वमीश्वरप्रीतिद्वारा ऽपि कर्मणः सिद्धः । एवं ज्ञानसमुच्चयवाक्येभ्यो मोक्षप्रतिबन्धकपापक्षयद्वारा मोक्षहेतुत्वमपि कर्मणामनुमेयम् । अन्यथा सहकारित्वेन च । अग्निहोत्रादि तु तत्कार्यायैवेति वक्ष्यमाणसूत्रद्वयविरोधात्तथा च जिज्ञासामात्रेण न कर्मत्यागः । जिज्ञासोत्तरमपि ज्ञाने योगे मोक्षे च प्रतिबन्धकसम्भवादिति । जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तत इति वाक्यं च परम्परया विधिकिंकरत्वाभावं फलं बोधयति । अनेकजन्मसंसिद्धस्ततो याति परां गतिमिति वाक्यशेषात् । ननु योगजिज्ञासामात्रेण कर्मत्यागं सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत इति च कर्मणां ज्ञानाङ्गत्वं बोधयति । अभ्यासेऽप्यसमर्थो ऽसि मत्कर्मपरमो भवेति वाक्यं चाऽभ्यासाऽसमर्थस्य केवलं कर्म विदधाति परमशब्दादिति । तस्मात्सर्वकर्माणि संन्यस्य श्रवणं कुर्यादित्यपसिद्धान्तः कलिकृत एव ।

पुंसां जटाधरणमौण्ड्यवतां वृथैव
मोघाशिनामखिलशौचबहिष्कृतानाम् ।
पिण्डप्रदानपितृतोयविवर्जितानां

(१) कूर्मपुराणे अ० ३ श्लो० २४ ।

संभाषणादपि नरा नरकं प्रयान्ति[१] ॥

इति विष्णुपुराणात् । इथा समाधिरोगादग्रशक्तिं विनेत्यर्थः । तथा ।

यस्तु विद्याभिमानेन वेदमार्गप्रवर्तनम् ।
छलजात्यादिभिर्जह्यात् स महापातकी भवेत् ॥
श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते ।
आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न मे प्रियः ॥
दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥

इत्यादिस्मृतेश्चेत्यवधेयम् यच्चान्यैरुक्तं,विचारविधिपरमिदं सूत्रमिति तदपि मन्दं,श्रुताविव "तद्विजिज्ञासस्व आत्मा वा अरे श्रोतव्य"इति विचारे निःसन्दिग्धविधिमत्त्वेन तत्र सूत्रवैफल्यात् शास्त्रादावभिधेयाप्रतिज्ञायामुन्मत्तप्रलापवदुपेक्षणीयतापत्तेः,सर्वशास्त्रदृष्टप्रतिज्ञापरत्वसम्भवे तत्त्यागानौचित्याच्च । अत एव पूर्वपक्षसूत्रवदस्य शिष्यप्रश्नसूत्रत्वमपि नोचितम् । अभ्यर्हिताया ग्रन्थारम्भप्रतिज्ञाया एव संभवादिति । ननु यदि शमदमादिसम्पन्नः सर्वकर्मसंन्यासी नात्राधिकारी तदाऽस्या ब्रह्ममीमांसायाः कीदृशोऽधिकारीति वक्तव्यम् । उच्यते शास्त्रार्थग्रहणोपयोगिशमादियुक्तो गुरुभक्तिनित्यकर्मतपआदिसम्पन्नो जिज्ञासुः कर्मफलविरक्त इति । "परीक्ष्य लोकान्कर्मचि-

---

(१) अं० ३ अ० २८ श्लो० १०३ ।

तान्ब्राह्मणो निर्वेदमाया"दित्याद्युक्तश्रुतेः।

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः"॥
इत्यादि श्रुतेश्च।

इदं ते नाऽतपस्काय नाऽभक्ताय कदा चन।
न चाऽशुश्रूषवे वाच्यं न च मां यो ऽभ्यसूयति॥

इत्यादिस्मृतेश्चेति। शास्त्रोक्तविद्याभ्यासे पुनरधिकारी योगशास्त्रोक्तयोगाङ्गादिसम्पन्नः श्रवणमननाभ्यां कोमलकण्टकन्यायेनोत्पन्नज्ञानो नारदीयोक्तनित्यानित्यविवेकादिसाधनचतुष्कवान् "शान्तो दान्त उपरत" इत्याद्युक्तश्रुतेः। तत्र चोपरतिर्योगविरोधिकर्मभ्य उपरम इति। तत्रापि मन्दाधिकारी गृहस्थादिस्त्रिदण्डिपर्यन्तः। उत्तमाधिकारी च परमहंसः।

चतुर्विधा भिक्षवः स्युः कुटीचकबहूदकौ।
हंसः परमहंसश्च श्रेयांश्चैषां यथोत्तरम्॥
आत्मनिष्ठः स्वसंसक्तः त्यक्तसर्वपरिग्रहः।
चतुर्थोयं महानेषां ध्यानभिक्षुरुदाहृतः॥

इति विष्णुधर्मसंहितादिवाक्यात् परमश्चासौ हंसश्चेति परमहंसः परमात्मा "यमाङ्गः परमहंस"मित्यादिस्मृतेः तन्निष्ठत्वाद्यतिरपि परमहंस उच्यते हंसशब्दस्यात्मवाची।

सकारेण बहिर्याति हकारेण विशेत्पुनः।

प्रतिनियतदेशकालसंस्थानादिव्यवस्थितं विश्वनिर्माणं रचना तस्याः केवलादचेतनादनुपपत्तेरित्यर्थः स्वतादृशनाभदेहात्तन्तूत्पत्तेरदर्शनादिति भावः।

## प्रवृत्तेश्च।

प्रवृत्तेः रचनानुकूलस्य प्रधानव्यापारस्याप्यनुपपत्तेः लोके चेतनाधिष्ठानादेव प्रयत्नरूपादचेतनशरीरादेः क्रियोत्पत्तिदर्शनादित्यर्थः।

## पयोऽम्बुवच्चेत्तत्रापि।

ननु यथा पयः क्षीरं स्वयमेव प्रतिनियतावस्थं दधि रचयति वत्सविवृद्ध्यर्थं च स्वयमेव स्रवति यथा च अम्बु प्रतिनियतावस्थं करकादिकं रचयति निम्नदेशं च स्वयमेव गच्छति एवं प्रधानमपि स्यादिति चेत् तत्रापीश्वराङ्गीकारं विना रचनाप्रवृत्त्योरनुपपत्तिरेव तथा च पक्षसमत्वान्न तयोर्दृष्टान्ततेत्यर्थः इदानीं ब्रह्मकारणत्वे परैरुक्तानि दूषणानि उपसंहारदर्शनान्नेत्यादीनि परेषां मते एव भवन्ति बलवत्तरश्रुतिप्रामाण्यानभ्युपगमेन लौकिकतर्काविरोधादेव स्वतन्त्रस्य तर्कस्य स्वविषयसाधकत्वासम्भवादित्याह सूत्रैः।

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात्।

तवापि प्रधानव्यतिरेकेण कारणान्तरस्यानवस्थितेरनभ्युपगमाच्च अनेक कारणानपेक्षतया प्रधानस्य कारणत्वानुपपत्तिः लोके बाह्यानेककारणोपसं-

क्षारेणैव मृदादीनां घटादिकारणत्वोपलम्भादित्यर्थः ननु क्षीरवदिति भवदुक्तदृष्टान्तसत्त्वान्नैष दोष इति चेन्न, तर्हि अस्मन्मतदूषणोपन्यासानौचित्यात्, क्षीरेणापि बाह्यादृष्टादिसहकार्युपसंहाराच्च । ननु चेतनेष्वेव सहकार्यपेक्षा स्वतो ऽविकारित्वात् न त्वचेतनकारणेष्वप्ययं नियमः गोभिरुपभुक्तानां तृणादीनां स्वयमेव दुग्धादिरूपेण परिणामसंभवात् विकारिस्वाभाव्यात् एवं क्षीरादीनामपीत्याशङ्कामपाकरोति ।

## अन्यत्राभावाच्च न तृणादिवत् ।

यदुक्तं तृणादिवत्स्यादिति तत्र दृष्टान्तासिद्धेः कुतः अन्यत्राभावात् धेनूदरादिभ्यो ऽन्यत्र बलीवर्दोदुदरे तृणादीनां दुग्धादिकारणत्वाभावादित्यर्थः, तथा च तृणादिष्वपि धेनूदरस्थाग्न्यादिरूपबाह्याननाकरणापेक्षेति दृष्टान्तासिद्धिः, नन्वस्माभिः प्रधानस्य बाह्याः सहकारिशक्तिभेदा अनेका ऽभ्युपगन्तव्या इति न व्यतिरेकानवस्थितिस्तत्राह ।

## अभ्युपगमे ऽप्यर्थाभावात् ।

प्रधानव्यतिरिक्तकारणाभ्युपगमे ऽपि प्रधानकारणतया न संभवति कुतः अर्थाभावात् (*भवद्भिरस्मासूपन्यस्ता[२])प्रयोजनाभावात् अचेतनस्य स्वप्रयोजनासंभवादित्यर्थः ।

(२) अयं पा० २ पु० ना० ।

## पुरुषाश्मवच्चेत्तथापि।

पुरुषाणां भोक्तृणामश्मादिवहनादौ यथोष्ट्रादेः परार्थैव प्रवृत्तिर्भवति तथैव पुरुषार्थे प्रधानस्यापि प्रवृत्तिः स्यादिति चेत्तथापि प्रकृतेः प्रवृत्तिरनुपपन्ना दृष्टान्ते परार्थतावत् स्वार्थताया अपि दर्शनात् अव-हननिमित्तकताडनादिजन्यदुःखनिवृत्तेरेवोष्ट्राद्यर्थ-त्वादित्यर्थः। (*यदि च नद्यादीनामिव केवलपरार्थैव प्रवृत्तिरिष्यते तदाऽस्मासु प्रवृत्त्यनुपपत्त्युपन्यासो नो-चित इतिभावः[१]) किं च।

## अङ्गित्वानुपपत्तेश्च।

सत्वादिगुणत्रयमभ्युपगम्यापि तेषामङ्गाङ्गीभाव-एव महदादिरूपविकारे कारणं वक्तव्यं तच्चाङ्गा-गित्वं यदि स्वत एव भवेत् सर्वदा सर्वकार्य्यप्रसङ्गः परतश्चेत् सिद्धस्तर्हि तत्कर्त्ता परमेश्वर इति अतो ऽङ्गित्वानुपपत्त्यापि स्वतन्त्र प्रधानवादो न संभवती-त्यर्थः। ननु परतःपक्षे कालविशेष एव परो वक्तव्य इत्याशङ्क्याह।

## अन्यथानुमितौ च ज्ञशक्तिवियोगात्

अन्यथानुमितौ कालविशेषादिभ्य एवाङ्गित्वा-दिकं भवतीत्यनुमितावपि ज्ञशक्तिरूपसहकारिकार-

(१) *अयं पा० २ पु० ना०।

णाभावात्प्रधानकारणत्वमसंभवीत्यर्थः गुणशक्तिर्ज्ञाने-च्छाकृत्यादिः एतेषां हि कार्यमात्रे कारणत्वेन क्रृप्तानां वियोगे केवलस्योपादानस्य कार्य्यकारित्वं तर्कविरुद्धमेवेति भावः।

## विप्रतिषेधाच्चासमञ्जसम्।

(*असन्नेव स भवत्यसद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरित्यादिश्रुतिभिर्निरीश्वरवादस्य निन्दितत्वादपि स्वतन्त्रप्रधानवादो ऽसमञ्जस इत्यर्थः यद्वा स यस्तान्पुरुषान्निरुह्य प्रत्युह्यात्यक्रामत्तंत्वौपनिषदं पुरुषं पृच्छामि तं चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यतीति तदिह न मेने शाकल्यस्तस्य ह मूर्धा विपपातेति श्रुत्या परमेश्वरप्रतिषेधाद्धेतोरसमञ्जसमनर्थ उक्त इत्यर्थः एवमेव[1]) जगदाहुरनीश्वरमपरस्परसंभूतं किमन्यत्कामहैतुकमिति गीतादिवाक्यैश्चासुरत्वादिना निरीश्वरस्वभाववादस्य प्रतिषिद्धत्वात् त्याज्यत्ववचनादपि तन्मतमसमञ्जसमनुत्तमभिति। कार्य्यकारणयोर्वैलक्षण्यादपोह्ये मतमसमञ्जसमिति दोषो ऽपि समान इति दृष्टान्तेनाह

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्।

वाशब्दो ऽप्यर्थे परिमण्डलः सर्वतो मण्डलाकारः परमाणुः अयमर्थः यथा ह्रस्वादल्पपरिमाण-

---

(१) अयं पा० २ पु० नास्ति।

द्व्यणुकादेर्महतां त्र्यणुकादीनामुत्पत्तिर्बौद्धप्रभेदानां स्वतन्त्राणुकारणवादिनामसमञ्जसा यथा वा परिमण्डलात्परमाणोस्तदपेक्षया दीर्घस्य द्व्यणुकस्योत्पत्तिस्तेषामसमञ्जसा कारणगुणविपरीतस्य कार्य्यगुणस्य तर्कविरुद्धत्वात् तथैव स्वतन्त्रप्रधानवादिनामपि वादो ऽसमञ्जसो व्यक्ताव्यक्तपरिच्छिन्नापरिच्छिन्नत्ववैधर्म्यात्कार्य्यकारणयोरित्यर्थः यथा च कार्य्यकारणयोर्जडब्रह्मणोर्विरुद्धगुणकतया ब्रह्मपरिणामस्तर्कविरुद्ध इति चेन्नास्माकमपि ब्रह्मोपादानतायां तर्कविरोधो न दूषणमिति श्रुतेस्तु शब्दमूलत्वादित्युक्तं परेषां तु केवलतर्केण प्रत्यवतिष्ठमानानां तर्कविरोधः स्यादेव दूषणमिति तथैव श्रुतिप्रामाण्यमभ्युपगच्छतो न्यायवैशेषिकयोः सांख्ये च यथोक्तकार्य्यकारणभाववादिमत्वे ऽपि नोक्तदूषणावकाशः "एतस्य वै सोम्यैषो ऽणिम्न एतावान्न्यग्रोधस्तिष्ठति" (*यस्तन्तुनाभ इवतन्तुभिःप्रधानजैरित्यादिश्रुत्यनुसारित्वादिति मन्तव्यम्, अणूनां च सत्वादिशब्दैः शास्त्रे प्रसिद्धानां प्रकृतिरूपेणेश्वरशक्तिविधयैव कारणत्वमिति न न्यायवैशेषिकयोर्वेदान्तविरोधाशङ्केति अनेन सूत्रेण दृष्टान्तमुद्रया स्वतन्त्राणुवादे ऽपि बौद्धानां वैलक्षण्यदोषः समान इत्युक्तम्। दृष्टान्तविधयोत्थापितं स्वतन्त्राणुकारणतावादं तर्कान्तरविरोधेनापि प्रतिषेधति।

(१) अप० पा० १ पु० ना०।

# उभयथापि न कर्मातस्तदभावः।

उभयथापि प्रयत्नादभिघातादेश्च सर्गादौ परमाणूनां कर्म न संभवति ईश्वरानङ्गीकारेण प्रयत्नाभावात् अनवस्थातश्चाभिघाताद्यसंभवात् अतस्तदभावः (*स्वतन्त्रपरिमण्डलाभावः[१]) परमाणुस्वातन्त्र्याभाव इत्यर्थः। आधुनिकास्तु पूर्वसूत्रेण वेदान्तिनां स्वपक्षस्थापनमिदं च सूत्रमारभ्य सूत्रजातैर्न्यायवैशेषिकमतनिराकरणमिति वर्णयन्ति (*सूत्रद्वयं चेत्थं व्याचक्षते यथाह्रस्वपरिमण्डलाभ्यां स्वविलक्षणयोर्महद्दीर्घयोरुत्पत्तिः परैरिष्यते तथैव ब्रह्मचिन्मात्रादपि स्वविलक्षणजगदुत्पत्तिरस्त्वित्यादिसूत्रार्थः प्रयत्नादभिघाताच्च लोकसिद्धकारणद्वयात् परमाणूनामाद्यं कर्म न संभवति प्रयत्नहेतुमनःसंयोगाद्यभावात् अनवस्थया चाभिघातासंभवात् अतस्तदभावो अणुकारणत्वाभाव इति द्वितीयसूत्रार्थ इति तदसत्, समवायिकारणवैलक्षण्ये ऽपि कार्याणां तद्धेजात्यासिद्धेः न्यायवैशेषिकयोर्नित्यप्रयत्नाङ्गीकाराच्च[२]) तद्वयम्, सूत्रकारेणाणुवादिनं प्रत्युच्यमानानां दोषाणां वेदान्तिमते ऽपि तुल्यत्वाच्च, अथ श्रुतिस्मृतिसिद्धत्वाद्ब्रह्मकारणतायां तर्कविरोधो न दूषणमितिचेत् एतस्येवाणिम्न एतावान्न्यग्रोधस्तिष्ठति कालस्वभावो निय-

---

(१) अयं पा० १ पु० ना०।
(२) अयं पा० १ पु० ना०।

तिर्यङ्गच्छा भूतानि योनिः पुरुष इति यः कारणा-
नि निखिलानि कालात्मयुक्तान्यधितिष्ठत्येकः अणो-
मीत्राविनाशिन्यो दशार्द्धानान्तु याः स्मृता । ताभिः
सार्द्धमिदं सर्वं संभवत्वनुपर्वशः इत्यादिश्रुतिस्मृतिभ्यां
शक्तिविधया अणुकारणताया अपि सिद्धत्वेन तन्म-
ते ऽपि तर्कैं विरोधस्यादूषणत्वादितिसमानम् विना-
शिन्यो ऽनाशिन्यः दशार्द्धानां यवभूतानां ताभिर्हेतु-
भिः सार्द्धं सहिताभिरिदं सर्वं ब्रह्माण्डादिकं क्रमेण
भवतीत्यर्थः किं च स्वपक्षः पूर्वपाद एव व्यवस्थापित
अतो दृश्यते त्वितिहेतुना पौनरुक्त्यापत्तिः तथा वा
शब्दार्थानुपपत्तिः परपक्षनिराकरणमध्ये स्वपक्षव्यव-
स्थापनासामञ्जस्यं चेति । अत्रैव मते कारणेष्वणुषु
कार्य्यस्य समवायो ऽभ्युपगम्यते न वेति विकल्प्य द्वि-
तीयं पक्षं समुदाय उभयहेतुके पीत्यादिसूत्रैर्निराक-
रिष्यति आद्यपक्षस्त्वादौ निराक्रियते ।

## समवायाभ्युपगमाच्च साम्यादन-
## वस्थितेः ।

इतश्च तदभावो यदि कार्य्याणामणुषु समवायो
ऽभ्युपगम्यते तदा नैयायिकवैशेषिकेषु भवद्भिरुपन्य-
स्तया समवायपरम्परया ऽनवस्था .तस्यां भवत्स्वपि-
साम्यापत्तेरित्यर्थः । किं च ।

## नित्यमेव च भावात् ।

अणूनां नित्यमेव सत्त्वाच्च तत्स्वातन्त्र्यासंभवः सर्वदा सृष्टिप्रसङ्गादित्यर्थः । ननु स्वमते न समवायोऽस्ति न वेति चेत्काकदन्तान्वेषणवत् एतदन्वेषणे प्रयोजनाभावः अस्तु वा सांख्यानुसारेण स्वरूपसम्बन्ध एवात्र समवायस्वलाभिर्षिक्तः समवाये तस्यावश्यकत्वादिति अणुनित्यत्वमप्ययुक्तमित्याह ।

रूपादिमत्वाच्च विपर्य्ययो दर्शनात् ।

परमाणूनां रूपरसादिमत्वेन हेतुना घटादिवन्नित्यत्वविपर्ययो युक्तः लोके तथा व्याप्तिदर्शनादित्यर्थः तथा च कारणानित्यत्वे कार्य्यस्य प्रवाहरूपेणानादित्वं नोचितमिति अस्माकं श्रुतिबलात्परमाणूनां रूपादिशून्यत्वेन न ह्ययोक्तानुमानं संभवतीति भावः ननु रूपादिमत्वमेव परमाणूनां न स्वीकार्य्यं तत्राह ।

उभयथा च दोषात् ।

रूपादिमत्वे यथोक्तदोषान्नीरूपादित्वे च कार्य्यस्यापि नीरूपादिताप्रसङ्गात्कार्यगतरूपादिनियामकतयैव परैः परमाणुषु रूपाद्यनुमानादित्यर्थः ।

अपरिग्रहाच्चात्यन्तमनपेक्षा ।

स्वतन्त्रस्वभाववादो ऽभ्युपगमवादत्वात्सांख्यैः स्वशास्त्रेषु यथा कथंचिदपेक्षणीयः अणुस्वातन्त्र्यं च कुत्रा यास्तिकशास्त्रेषु न परिगृह्यत इत्यतस्तत्रात्यन्तमेवानपेक्षा मन्तव्या मोक्षादावित्यर्थः अतो यथा क-

र्थंचित्तर्कविरोध परिहारे ऽपि शिष्टापरिग्रहात्तन्मत-
मुपेक्षणीयमेवेति । नन्वेवं मास्तु समवायो मास्तु च
परमाणुनित्यत्वं क्षणिकवादस्तु स्यात्पुञ्जात्पुञ्जोत्प-
त्त्यैव धारावाहिकरूपेण सृष्टिनित्यत्वसम्भवादिति
तत्राह ।

## समुदाय उभयहेतुके ऽपितदप्राप्तिः ।

एवमेके बौद्धा मन्यन्ते नास्त्यवयवी नाप्यात्मा स्थिरः किं तु पुञ्जात्मके समुदाये बाह्याभ्यन्तरभेदेनात्मात्मविभागो ऽवयवित्वैकत्वादिभ्रमश्च भवति स च पुञ्जात्मकः समुदायो नेश्वरहेतुकः किं तु उभयहेतुकः तत्र चतुर्विधाणुहेतुको बाह्यो घटादिः रूपविज्ञानवेदनासंज्ञासंस्कारहेतुकश्च पञ्चस्कन्धाख्य आन्तर आत्माख्य इति, रूपं करचरणादिमत्संस्थानं विज्ञानं ज्ञानमेव वेदना दुःखं संज्ञा देवदत्तादि संस्कारो वासना एतेषां राशिरेवात्मेति तेषां सिद्धान्तः तत्रेदं दूषणमुच्यते उभयहेतुकसमुदायमते ऽपि तदप्राप्तिः तस्य परस्परमेलनरूपसमुदायस्याप्राप्तिरसिद्धिः मेलनकर्त्तृचेतनानङ्गीकारात् लोके चेतनस्यैव तन्त्वादिमेलकत्वदर्शनादित्यर्थः ।

## इतरेतरप्रत्ययत्वादितिचेन्नो त्पत्तिमात्रनिमित्तत्वात् ।

प्रत्ययः कारणं नन्वणवादीनां संयोगाख्यः समु-

दायो ऽन्योन्यकारणकत्वादन्योन्यसाहाय्यादेव भविष्यतीति चेन्न, उत्पत्तिमात्रनिमित्तत्वात् उपादानतामात्रे ऽण्वादीनां प्रयोजकत्वात्, नतु कर्तृत्वे ऽपि तेषामचेतनत्वेन कर्तृत्वासम्भवात् कर्त्ता च कार्य्यमात्रे कारणमित्यर्थः । न वा ऽण्वादीनां समुदायीभावरूपपुञ्जतायामपि हेतुत्वं सम्भवतीत्याह ।

## उत्तरोत्पादे च पूर्वनिरोधात् ।

कार्य्यसह भूतमेवोपादानकारणं पटादौ दृश्यते न च क्षणिकवादिनां त त्सम्भवति उत्तरस्य कार्य्यस्य समुदायीभावादेरुत्पत्तिकाले पूर्वस्य कारणस्य समुदाय्यादेर्विनाशादित्यर्थः । अथैवमसत्यत्युपादाने कार्य्योत्पत्तिरस्तु नानुपमृद्य प्रादुर्भावादिति तत्राह ।

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ।

असत्येव हेतौ फलोत्पत्त्यङ्गीकारे सति उभयहेतुकत्वप्रतिज्ञाया उपरोधो बाधः अन्यथा यदि सत्येव कारणेक र्य्योत्पत्तिरुच्यते तदा क्षणिकवादिनां कारणकार्य्ययोर्यौगपद्यमेव स्यात् न पौर्वापर्यं तथा च कार्य्यकारणव्यवस्था नोपपद्येत नियामकाभावादित्यर्थः, ननु उपादानस्यापि पूर्वसत्त्वैवाभ्युपगन्तव्येति सहभावाभावे ऽपि न क्षतिरिति चेन्न, निमित्तकार-

णोपादानयोरविशेषापत्तेरिति। असत्कार्य्यपक्षे दूषणान्तरमाह।

## प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्।

कारणसत्वे ऽपि कार्य्योत्पत्त्यङ्गीकारे भवदभ्युपगतयोः प्रतिसंख्याऽप्रतिसंख्यानिरोधयोरप्राप्तिरसिद्धिः स्यात्कुत अविच्छेदात् असतः कारणात्कार्य्योपत्त्या सदैव कार्य्योत्पादेन कार्य्यपरम्पराया विच्छेदासंभवादित्यर्थः एवं हि तेषामभ्युपगमः वक्ष्यमाणत्रयादन्यत्सर्वं बुद्धिबोध्यं क्षणिकं च त्रयं च प्रतिसंख्यानिरोधो अप्रतिसंख्यानिरोधः आकाशं चेति एतत्त्रयमपि वस्त्वभावमात्रं निरुपाख्यं तत्र प्रतिसंख्यानिरोधो बुद्धिपूर्वकः आत्यन्तिकः प्रलयः स च विदुषां तद्विपरीतश्चाप्रतिसंख्यानिरोधः प्राकृतप्रलयादिः स चाविदुषां आकाशस्त्वावरणाभावमात्रमिति तत्र कार्य्याणामविच्छेदे सति निरोध द्वये नोपपद्यतेति। नन्वेवं यथोक्तनिरोधावपि नाङ्गीकार्य्यावस्माभिरिति तत्राह।

## उभयथाच दोषात्।

निरोधद्वयानङ्गीकारे च मरणभयादुद्विग्नान् शिष्यान् प्रति भवतां मोक्षार्थकोपदेशस्य वैयर्थ्यदोषापत्तेः मरणमोक्षरूपयोर्यथोक्तनिरोधयोरनङ्गीका-

रात्तदङ्गीकारे चासंभवस्योक्तत्वात् इति । किं च ।

आकाशे चाविशेषात् ।

न केवलं निरोधयोरेवासिद्धिरपि त्वाकाशे ऽप्यसिद्धिः स्यात् कुतः अविशेषात् कार्य्याविच्छेदरूपस्य हेतोरविशेषादित्यर्थः आकस्मिककार्य्यैः सर्वदा सर्वावरणप्रसङ्गादिति भावः । इतश्च नासद्रूपे कारणे कार्य्यमुत्पद्यते ।

अनुस्मृतेश्च ।

कार्य्यकारणयोरुभयोरपि प्रत्यभिज्ञाबलेन स्थिरतया ऽप्यसति कारणे कार्यस्यासिद्धिः अत्यन्तोच्छेदे स एवायमिति प्रत्ययासंभवादित्यर्थः अस्माभिश्च प्रलयमोक्षादीनामभावरूपत्वं नाभ्युपगम्यते नाशः कारणलय इत्यादिसांख्यसूत्रादिभिः कारणरूपेणावस्थानस्यैव नाशशब्दार्थत्ववचनादिति ।

नासतो ऽदृष्टत्वात् ।

इतश्च अत्यन्ताभावरूपादसतः कार्य्योत्पत्तिर्न संभवति शशशृङ्गादिभ्यः कार्य्यादर्शनादित्यर्थः ।

उदासीनानामपि चैवं सिद्धिः ।

किं च एवं सत्यभावाद्भावोत्पत्तौ कृष्यादिकर्म कुर्वतामपि तत्फलसिद्धिः स्यात् अभावस्य सर्वत्र स-

त्विव सुलभत्वादित्यर्थः। यदपि बौद्धैः सर्वमेवास-दुच्यते तदपि नेत्याह।

## नाभाव उपलब्धेः।

अभावमात्रमत्यन्ततुच्छं जगन्न भवति उपलब्धेः भावत्वे शशशृङ्गादिवदनुपलब्धिप्रसङ्गादित्यर्थः (*भूमस्थले चास्मन्मते प्रकारतत्सम्बन्धौ मनःपरिणामभूतावनिर्वचनीयतया नाभावरूपौ ननु भवन्मते कथं घटाभावस्योपलब्धिरितिचेन्न, अस्माभिरधिकरणाद्य-तिरिक्तस्याभावस्यैवानङ्गीकाराद्वैशेषिकादिभिस्तु प्र-तियोग्यधिकरणरूपसदुपरागेणैवाभावस्य ज्ञानमिष्य-ते न केवलस्य बौद्धानां तु प्रतियोग्यादीनामप्यभाव-रूपत्वात् नाभावोपलब्धिर्घटते केवलाभावप्रतीतेरद-र्शनादिति भावः[1]) यद्विचोपलब्ध्यर्थक्रियाकारित्वादि-सत्वे ऽप्यसत्वमुच्यते तदा परिभाषामात्रत्वेन तादृश-मसत्वं भवतु शशशृङ्गादिवैलक्षण्यस्यैवास्माभिरिष्ट-त्वात्तावतैवैश्वर्य्यधर्माधर्मोपासनाबन्धमोक्षादिव्यव-स्थोपपत्तेरिति। अनुस्मृतेश्चेत्यादिना क्षणिकशून्य-वादौ निरस्येदानीं विज्ञानवादं निरस्यति ब्रह्मसा-धककार्यकारणभावोपपत्तये।

## वैधर्म्याच्च न स्वप्नादिवत्।

सर्वं कार्य्यं कारणं च स्वप्नवद्विज्ञानमात्रं न भवति

---

(१) अयं पा॰ २ पु॰ ना

कुतः वैधर्म्यात् अर्थक्रियाकारित्वाबाधितत्वादिरूपवैधर्म्यादित्यर्थः न च स्वप्नेऽप्यर्थक्रियास्तीति वाच्यं, तस्या जागरे बाधात्, न च प्रपञ्चस्यापि श्रुत्या बाधोऽस्त्विति वाच्यं, श्रुतौ प्रपञ्चस्यात्यन्ततुच्छत्वाप्रतिपादनस्योक्तत्वात् तत्तुसमन्वयादित्यादिसूत्रेषु कार्य्यकारणभावादिप्रतिपादकश्रुतिविरोधात् श्रवणोत्तरं मननादीनां विधेयत्वासम्भवाच्च न हि तुच्छतां प्रतिपाद्य तत्र विधिकल्पित इति अधिकं तत्रतत्रोक्तं लौकिकप्रमाणेन सहाविरोधसंभवे श्रुत्या तद्बाधनानौचित्याच्चेति एतेन वेदान्तेषु प्रपञ्चस्यात्यन्ततुच्छत्ववादोऽप्रामाणिक इति मन्तव्यम् आचार्य्यैः स्वप्नतुल्यतायाः प्रतिषेधात्, ननु तर्कमात्रावष्टम्भेनोत्तिष्ठतामेव मतं तर्केण निराक्रियते न पुनरत्र शास्त्रार्थोऽवधार्य्यते तथा सति प्रधानाणवादीनामपि पूर्वसूत्रैर्निषेधापत्तेरिति चेन्न, धर्माधर्मेश्वरादिव्यवस्थाविरोधिनां बौद्धमतानां निःशेषोन्मूलनस्याभिप्रेतत्वात्प्रधानाणवादीनां च स्वरूपतः सूत्रकारेण वक्तव्यतया शिष्टपरिगृहीततया धर्माधर्मेश्वरादिव्यवस्थोपयोगितया च स्वातन्त्र्यानिरासमात्राभिप्रायावधारणात् (*धाता यथा पूर्वमकल्पयत् कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्य इत्यादिश्रुतिभिः प्रपञ्चस्य स्वप्नवाद्वैलक्षण्याथार्थ्यसिद्धेश्चेति) यत्र शास्त्र

(१) अर्थ भा० २ पु० ना० १

विकाराणां स्वप्नदृष्टान्तप्रदर्शनं तद्वैराग्यार्थं क्षणभङ्गुरत्वादिपरं न पुनर्बाह्यविषयाभावपरम् अन्यथा।

तस्मादसदभिध्यानं यथा स्वप्नमनोरथम्।
हित्वामपि समाधत्स्व मनो मद्भावभावितः॥

इत्यादिवाक्येषु प्रपञ्चस्य स्वप्नतुल्यत्वकथनोत्तरं परमेश्वरे मनः समाधानस्य विधानानुपपत्तेः समाधानस्यापि स्वप्नवदवस्तुत्वावगमादिति बोध्यम्। यदपि तेषां मतं विना ऽप्यर्थभेदं ज्ञानवैचित्र्यं वासनावैचित्र्यादेव भवतीति तदपि नेत्याह।

## न भावो ऽनुपलब्धेः।

भावो वासना सापि न संभवति उपलब्धिं विनेत्यर्थः न च पूर्वपूर्वोपलब्ध्या उत्तरोत्तरवासनेति अनादिरेव प्रवाहो ऽस्त्विति वाच्यम्, अप्रामाणिकाऽनवस्थाप्रसङ्गात्कर्माद्यनवस्था तु बीजाङ्कुरवत् श्रुत्यादिप्रमाणसिद्धैवेति भावः।

## क्षणिकत्वाच्च।

सर्ववस्तूनां क्षणिकत्वाद्वासनानामाश्रयो न संभवति वासनाश्रयत्वेन कल्पितानां प्रवृत्तिविज्ञानवदेव क्षणिकत्वेन वासनत्वादित्यर्थः। (अत्र चाग्रवाणं बीनियामकाभावाद्यवदूषितार्तं ...विद्यानस्तकाद्।

## सर्वथा ऽनुपपत्तेश्च ।

किं च यथायथा वैनाशिकसमयः परीक्ष्यते तथा तथा सिकताकूपवद्विदीर्य्यत एव अतः सर्वथा ऽनुपपत्तेर्वैनाशिकमतमसमञ्जसमित्यर्थः सा च परीक्षा-परम्परा न्यायदर्शनादिष्वनुसन्धेया अत्र तु श्रवणशास्त्रे तर्कबाहुल्यानौचित्येन दिङ्मात्रं प्रदर्शितमिति भावः ।

## नैकस्मिन्नसंभवात् ।

अपरे तु वेदबाह्या दिगम्बरा एकस्मिन्नेव पदार्थे भावाभावौ मन्यन्ते तन्मतं निराक्रियते वेदान्तोक्तस्य सत्कार्य्यवादस्य ब्रह्मकारणतोपयोगिनः सिद्ध्यर्थं । तत्रैवं ते कल्पयन्ति सामान्यतः सदसतौ द्वावेव पदार्थौ आकाशादयो धर्मिणः एकत्वादयश्च धर्मा अनयोरेव विशेषाः तत्र सर्वेष्वेव पदार्थेषु सप्तभङ्गी-न्यायेन सदसत्त्वमनिर्वचनीयत्वं चास्ति तद्यथा सर्वं वस्त्वव्यवस्थितमेव स्यादस्ति स्यान्नास्ति स्यात्-
स्यान्नास्ति वा वक्तव्यः स्यादस्ति वा ना-
स्ति वा वक्तव्यः स्यान्नास्ति वा वक्त-
नास्तिचावक्तव्यश्चेति सर्वत्रैव स्यात्-
तथा च अस्तीति भवतीत्यादिरर्थ
च्यते न एकस्मिन् वस्तुनि यथोक्तभा-
मपि कुतः असम्भवात्प्रकारभेदं वि-

महावस्थानसंस्थानासंभवात्प्रकारभेदाभ्युपगमे वाऽत्मन्यतप्रवेशेन सर्वैव व्यवस्थास्ति कथमव्यवस्थितं जगदभ्युपगम्यते भवद्भिरित्यर्थः।

## एवं चा ऽऽत्माकात्स्न्र्यम्।

यथा चैकत्र सदसत्वादिकमसम्भवति एवमेव दिगम्बराणामात्मकात्स्न्यमात्मपरिच्छिन्नत्वमप्यसम्भवीत्यर्थः ते हि मन्यन्ते संसारदशायां परिच्छिन्न आत्मा मोक्षावस्थायां विभुर्भवतीति तदेतद्विरोधासम्भवतीति। ननु विभुत्वाविभुत्वयोः कालभेदादविरोधः स्यादित्याशङ्कामपाकरोति।

## न च पर्य्यायादप्यविरोधो विकारादिभ्यः।

न च पर्य्यायात्क्रमात्कालभेदे वाप्यविरोधः संभवी कुतः, विकारादिभ्यः आत्मनो विकारित्वसावयत्वादिभिर्मोक्षस्यानित्यत्वप्रसङ्गादित्यर्थः।

## ...णावस्थितेश्चोभयनित्यत्वाद-

...स्य मोक्षावस्थपरिमाणस्यावस्थितिर-
...ः स्वसिद्धान्तमात्राभिनिवेशेनेष्यते

सारदशायां परिच्छिन्नत्वमुच्यते लाघवान्नित्यस्यैकपरिमाणस्य विभुत्वस्यैव कल्पनार्हत्वासम्भवादिति। तदेवमनीश्वरवादिनस्तार्किका निराकृताः। इदानीं केवलेनानुमानेनेश्वरसाधनमपाकरोति ब्रह्मण्युक्तस्य शास्त्रयोनित्वस्य सिद्ध्यर्थं तथा तर्कशास्त्रतो ब्रह्ममीमांसाया गतार्थत्वशङ्कामपनेतुं च।

## पत्युरसामञ्जस्यात्।

नानुमानमित्याद्यसूत्रादनुवर्तते तथा चासामञ्जस्याद्वैषम्यनैर्घृण्यापत्तेर्न पत्युरीश्वरस्यानुमानं संभवतीत्यर्थः सांख्याद्युक्तेन विरोध्यनुमानेन सत्प्रतिपक्षत्वादिति भावः।

## संबन्धानुपपत्तेश्च।

संबन्धो.व्याप्तिः कार्यत्वसकर्तृकत्वयोरनुकूलतर्काभावेन श्रुतिप्रवृत्तेः प्राग्व्याप्तिग्रहानुपपत्तेश्च नानुमानस्वातन्त्र्यमित्यर्थः।

## अधिष्ठानानुपपत्तेश्च।

करणं विना कर्तृत्वासंभवाच्चेत्यर्थः।

वदेवैष्टव्यमित्याशङ्कायामाह।

## करणवच्चेन्न भोगादिभ्यः

[illegible]

ज्ञानतोऽज्ञानतो वापि यत्किंचित्कुरुते नरः।
तत्सर्वं भगवानेव कुरुते योगमायया॥

इत्यादिवाक्यशतेभ्यश्च(*तथा च न्यायस्य पूर्वपक्ष सूत्रम्, ईश्वरः कारणं पुरुषकर्माफल्यदर्शनादिति स हि कर्त्तेत्यादिजीवप्रकरणस्थश्रुतिश्च[१]) कार्य्याणां पुरुषार्थप्रयुक्ततया रथो गच्छतीत्यादिव गौणत्वेनाप्युपपद्यत इति। तत्र गुणप्रधानरूपेणोभयोरेव कर्तृत्वं सिद्धान्तयितुं जीवस्यापि कर्तृत्वं सिद्धान्तयति कर्त्ता शास्त्रार्थवत्वात्, जीवोऽपि स्वव्यापारे कर्त्ता भवति कुतः शास्त्रार्थवत्वात् विधिप्रतिषेधशास्त्रावैयर्थ्यायेत्यर्थः। जीवकर्मविनाऽपि ब्रह्मणः कर्तृत्वे विधीनां ह्यननुष्ठानलक्षणाप्रामाण्यं स्यात्। तथा ब्रह्मणो वैषम्याद्यापत्तिश्चेति भावः। स्वर्गादिकर्तृत्वं नाऽदृष्टद्वारा जीवस्य बोध्यम्। अत एव ऐहिककर्माभावस्थले प्राक्तनं कर्म कल्प्यं, पुरुषव्यापारेऽपि फलानिष्पत्तिरीश्वराख्यकर्त्रन्तराननुग्रहात् कर्मवैगुण्यादिभ्यो वेति मन्तव्यम्। अन्यथा हि स हि कर्त्तेत्यादिश्रुतौ गौणत्वमप्यन्याय्यं स्यात्, ज्ञानतोऽज्ञानतो वापीत्यादिवाक्यानि च प्रकृष्टं स्वातन्त्र्यलक्षणमेव कर्तृत्वं प्रतिषेधन्ति, न तु पारतन्त्र्येण कर्तृत्वमपि त्वत्प्रयुक्तः करोम्यहमित्यादिस्मृतेः। तथा च न्यायस्य सिद्धान्तसूत्रं न पुरुषकर्माभावे फलानिष्पत्तेरिति तत्कारित्वादहेतुरिति च अहेतुरिति पुरुषकर्मनैष्फल्यं हेतुर्न भवतीत्यर्थः। ई-

(१) न्याय पा० १ पु० ना०।

श्वरस्य सर्वकर्तृत्वं चात्मकृतेः परिणामादित्यनेनो-
क्तम्, अत उभयोरेव जीवेश्वरयोः कर्तृत्वं विशेषस्त्वि-
यान् जीवो ऽदृष्टद्वारैव महदादिषु संयोगभावात् कर्त्ता
ईश्वरस्तु साक्षात्कृत्यैव सर्वकर्त्तेति। इतश्च जीवः कर्त्ता।

## विहारोपदेशात्।

विहारः क्रीडा स्वेच्छया चेष्टनं तस्योपदेशात्
यदि पितृलोककामो भवति संकल्पादेवास्य पितरः
समुत्तिष्ठन्तीत्यादिरूपादित्यर्थः। यैस्तु स्वाप्ने रथादि-
सृष्टिरत्र विहारशब्देन व्याख्यायते तैरपि स्वाप्नीसृष्टि-
रदृष्टद्वारैव जीवकर्तृका वाच्या तच्च जाग्रत्सृष्टावपि
समानमिति विशेषवचनं न युक्तं, न च स्वाप्नसृष्टौ
जीवमात्रकर्तृकत्वाद्विशेष इति वाच्यम्, अपसिद्धान्ता-
त्सर्वकर्मेत्यादिश्रुतिभिरीश्वरस्य सर्वकर्तृत्वसिद्धेरिति।
इतश्च जीवःकर्त्ता।

## उपादानात्।

"तदेषां प्राणानां विज्ञानेन विज्ञानमादाये-
प्राणान् गृहीत्वे"ति च श्रुतिभ्यां सिद्धात् जीवस्य सु-
षुप्तौ स्वेच्छया करणवर्गग्रहणाच्चेत्यर्थः। यद्यपि जी-
वानां करणगोचरः साक्षात्कारो नास्तीति तद्गोचरा-
कृतिर्न सम्भवति तथापि निद्रानिमित्तकारणचक्षुर्नि-
मीलनादिद्वारैव निद्रायां कर्तृत्वं बोध्यम्। किं च

"चन्द्रमा मनसो जातश्चक्षोः सूर्य्यो ऽजायते" त्यादिभ्यः अतस्तर्कतो ऽपि कारणवदेवास्तु इति चेन्न, ब्रह्म कारणवन्न भवति कुतः, भोगादिप्रसङ्गात् जीववत्सुखदुःखादिभोगस्य रागद्वेषादेश्च प्रसङ्गादित्यर्थः करणानां त्रिगुणात्मकत्वेन दुःखादिस्वाभाव्यादित्याशयः अस्माकं तु केवलप्रकृतिसत्वस्यैवेश्वरोपाधित्वाज्ज्ञोकारादीश्वरस्य दुःखाद्यभावः नित्यानन्दस्तु श्रुतिप्रामाण्यादिच्छादिवत्केवलप्रकृतेर्धर्म इत्युक्तं प्राक् प्रकृतेश्च कर्त्तृत्वमेव न करणत्वम् आत्मनो ऽकर्तृत्वेन कर्त्रन्तरासंभवाज्जीवकोटाविच्छादिवत्कर्तृत्वमपि बुद्धेरेव करणत्वं तु मनआदीनामिति ज्ञाने तु बुद्धिः करणत्वं न तु मनआदीनामिति ज्ञाने तु बुद्धेः करणत्वं विषयसमर्पकत्वेनेति वक्ष्यामः। न तस्य कार्य्यं करणं च विद्यते कार्य्योपाधिरयं जीवः कारणोपाधिरीश्वर इतिश्रुतिविरोधात्तु चन्द्रमा मनसो जात इत्यादिश्रुतीनां हिरण्यगर्भरूपेण ब्रह्मोपासनायां तात्पर्यं पातञ्जले च सत्त्वस्य चाभ्युपगमवाद (*उपाधितामात्रवाद[1]) इतिभावः।

## अन्तवत्त्वमसर्वज्ञता वा।

किं च करणाधीनज्ञानादिकत्वे सतीश्वरस्य घटादिवान्तवत्वं विनाशित्वं प्राकृतप्रलये विलय

[1] *अयं पा० २ पु० ना०।

इति यावत् तथा ऽसर्वज्ञत्वं च स्या(*त्कारणजन्यतया ज्ञानेच्छाकृतीनाम् नित्यत्वप्रसङ्गात् क्रियायाः कारणविशेषो हि करणमिति१) तथा च नित्यो नित्यानां चेतनश्चेतनानां नैवाह तस्य न निशा नित्यस्य परमात्मनः उपचारात तथाप्येतत्तस्येशस्य हिजोच्यत इत्यादि श्रुतिस्मृतयः यः सर्वज्ञः सर्वविदित्यादिश्रुतयश्च पीडेरन्नित्यर्थः वाशब्दो ऽत्र समुच्चये। इतश्च ब्रह्मणः करणं नास्ति।

## उत्पत्त्यसंभवात्।

ब्रह्मणः करणानां कर्त्रभावेनोत्पत्त्यसंभवादित्यर्थः। ननु स्वयमेव परं ब्रह्म स्वरूपकरणनिर्मातृ स्यादित्याशङ्कामपाकरोति।

## न च कर्त्तुः करणम्।

न हि कर्त्तुः सकाशात्स्वकरणमुत्पत्तुमर्हतीत्यर्थः करणोत्पत्तेः प्राक्करणाख्यसहकार्यभावेन कर्तृत्वासंभवादित्यर्थः।

## विज्ञानादिभावे वा तदप्रतिषेधः।

वाशब्दश्चार्थे यदि च विज्ञानादिभिर्विज्ञानेच्छाकृत्यादिनित्यत्व एव मति स्रष्टादावीश्वरस्य करणं मनआदिकमुच्यते तैरेव ब्रह्मणा विश्वनिर्माणाच्चताद्दृशकरणस्य प्रतिषेधो न क्रियते मनआदीनाम्

(१) अयं पा० २ पु० नां०।

श्रज्ञानादौ कारणत्वस्यैवास्माभिरनभ्युपगमादित्यर्थः।

विप्रतिषेधाच्च ।

"न तस्य कार्य्यं करणं च विद्यत" इत्यादिश्रुतिभिर्ब्रह्मणः करणप्रतिषेधाच्च ब्रह्म न करणवदित्यर्थः इति ब्रह्ममीमांसायां विज्ञानयतिविरचिते विज्ञानामृताख्यऋजुभाष्ये द्वितीयाध्यायस्य द्वितीयः पादः

यथोक्तब्रह्मणि स्मृतिन्याययोर्विरोधः प्रथमपादेन परिहृतः। द्वितीयपादेन च निरीश्वरा नास्तिकवादा निराकृताः। तथा केवलानुमानिक ईश्वरवादश्चान्त्याधिकरणे निराकृतः। इदानीं जन्माद्यस्य यत इति यद्ब्रह्मणः आकाशादिसकलप्रपञ्चजन्मादिकारणत्वं लक्षणमुखेनोक्तं सामान्यतश्च परीक्षितं तदुत्पत्तिविशेषतः परीक्षणीयं तत्प्रसङ्गेनैव जीवस्य गौण्युत्पत्तिप्रतिपादनाय ब्रह्ममुख्यशक्तेर्जीवस्य नित्यत्वांशत्वचिन्मात्रस्वरूपत्वादिकं विस्तारतो विचारणीयं यत्तदर्थं तृतीयः पादः आरभ्यते।

न वियदश्रुतेः।

ननु जन्माद्यस्य यत इति यत्प्रतिज्ञातं तन्नोपपद्यते कुतः, वियदश्रुतेः वियति अश्रुते अर्थाज्जन्मादीनामित्यर्थः छान्दोग्ये तेजआदीनामिवाकाशस्य हि जन्मादि न श्रूयत इति भावः। अत्र सिद्धान्त माह।

अस्ति तु।

यद्यपि छान्दोग्ये नास्ति तथापि तैत्तिरीयकादिषु श्रुतिरस्ति वियज्जन्मादिबोधिनी "एतस्मादात्मन आकाशः संभूत" इत्यादिरित्यर्थः तदेकवाक्यतया च छान्दोग्यीयसृष्टावपि वियत्सृष्टिः पूरणीया(*अथ वा जगत्कारणतया ब्रह्मप्रतिपादनस्यैव श्रुतिष्वभिप्रेततया सृष्टौ तात्पर्याभावेन तन्न्यूनतायामपि न क्षतिरिति भावः[१])। पुनः पूर्वपक्षी सूत्रचतुष्टयेन स्वाभिप्रायं प्रकटयति।

## गौण्यसंभवात्।

सत्यं श्रुतिरस्ति तथापि सा गौणी कुतो ऽसंभवात्, निरवयवस्य नभसः प्रकृतिपुरुषवदेव समवाय्यसमवायिकारणयोरसंभवात् अत एव वियतो विनाशश्रुतिरपि गौणीत्यर्थः प्रकृतिपुरुषयोरिवाकाशे ऽप्यभिव्यक्तिरेव कार्य्यगुण इति बोध्यं न तु युक्तिप्राबल्यादस्यैव सूत्रस्य सिद्धान्तत्वं कथं नेष्यत इति चेन्न, एतेन मातरिश्वा व्याख्यात इत्यागाम्यतिदेशसूत्रानुपपत्तेः वायूत्पत्तेरगौणत्वादिति। ननु श्रुतिबलाद्युक्तिर्बाधनीया तत्राह।

## शब्दाच्च।

"वायुश्चान्तरिक्षं चैतदमृतं आकाशवत्सर्वगतश्च नित्य" इत्यादिश्रुतेश्चाकाशजन्मादिश्रुतिर्गौणीत्यर्थः तथा

(१) अयं पा० १ पु० ना० ।

निरंशत्वाद्विभुत्वाच्च तथा नश्वरभावतः ।
ब्रह्म व्योम्नोर्न भेदोऽस्ति चैतन्यं ब्रह्मणोऽधिकम् ॥

इत्यादिस्मृतेश्चेति । नन्वेवं "एतस्मादात्मन आकाशः संभूत आकाशाद्वायुरि"त्यादितैत्तिरीयकश्रुतावेकस्यैव संभवशब्दस्य वाय्वादिषु मुख्यत्वे वियति च गौणत्वे युगपद् वृत्तिद्वयविरोधः स्यादित्याशङ्क्य समाधत्ते ।

## स्याच्चैकस्य ब्रह्मशब्दवत् ।

यथैकस्मिन्नेव वाक्ये एकस्यैव ब्रह्मशब्दस्य तपोऽन्नहिरण्यगर्भादिषु गौणत्वं परमात्मनि च मुख्यत्वं तथैव संभवादिशब्दस्यापि स्यादित्यर्थः, ननु ब्रह्मशब्दे व्यक्तिभेदान्न युगपत् वृत्तिद्वयविरोध इति चेत् संभवशब्दस्यापि वाय्वादिष्वनुषङ्गेन व्यक्तिभेदः समान इति भावः । ननु आकाशस्य नित्यत्वे "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि"त्यादिप्रतिज्ञाया एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाश्च संकोचः स्यादाकाशेन द्वैतप्रसङ्गादित्याशङ्कां समाधत्ते ।

## प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ।

यथोक्तप्रतिज्ञयोर्हानिर्नास्ति कुतः शब्देभ्योऽव्यतिरेकावगमात् अव्यतिरेकस्यानतिरेकस्यैवाविभागाख्यस्य श्रुतिभ्योऽवगमात् न तु प्रलये गगनादीनामभावस्येत्यर्थः, तथा सतीदंशब्दवैयर्थ्यात्स-

दसतोः केनापि प्रकारेणाभेदानुपपत्त्यैकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः सुतरामनुपपत्तेश्च इतो ऽपि उक्तप्रतिज्ञे भवद्भिरप्यविभागलक्षणाद्वैतपरे एवाभ्युपगन्तव्ये न पुनरखण्डाद्वैतपरे यथा मधुमधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समवहारमेकतां रसं गमयन्ति ते यथा तत्र न विवेकं लभन्त इत्यादिदृष्टान्तप्रदर्शनेनाविभागलक्षणाद्वैत एव श्रुतेस्तात्पर्यावधारणात् तथा "ऽस्य पुरुषस्य प्रयतोवाङ्मनसि संपद्यत" इत्यादिस्मृतावपि संमिश्रणवाचकात्संपत्तिशब्दात् अविभागस्यैवावगमात् एवं न तु तद्द्वितीयमस्ति ततो ऽन्यद्विभक्तमित्यादिश्रुतयो ऽप्यविभागलक्षणाव्यतिरेके प्रमाणानि, अत एव सूत्रकारो वक्ष्यत्यविभागो वचनादिति, तथा सांख्यशास्त्रे ऽप्यविभागावेव प्रलयसर्गकालयोर्विश्वस्योक्तौ यथा कारणकार्यविभागादविभागाद्वैश्वरूप्यस्येति(*अन्यथा चाविद्याद्रष्ट्रादीनां प्रलये सत्ताभ्युपगमो ऽपि भवतां नोपपद्येत तैरेवाखण्डताप्रच्यवादिति[1])एवं च सत्याकाशस्य नित्यत्वे पि प्रकृतिपुरुषयोरिव ब्रह्मण्यविभागेनैवैकत्वप्रतिज्ञा (*तथा दुःग्धज्ञानेन दुःग्धघटनिःक्षिप्तजलबिन्दुज्ञानवत् ब्रह्मज्ञानेन ब्रह्मप्रलीनसर्वपदार्थज्ञानं चोपपद्यतइति[2]) (*तथैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा चोपपन्ना कारणे कार्यस्याविभागेन दुग्धज्ञाना-

(१) अयं पा० १ पु० ना० ।

(२) अयं पा० १ पु० ना० ।

तदनुगतजलज्ञानवत् ब्रह्मज्ञानेन सर्वविज्ञानाद्विभक्ताकार्यावस्था तु न ब्रह्मज्ञानेन ज्ञातुं शक्यत इत्याशयादेकविज्ञानेन सर्वविज्ञानोपपन्नमितिश्रुत्या विकारस्यासत्यत्वमुक्तं सत्यं वास्तवं नित्यमिति पर्यायः अविभागलक्षणाभेदस्यैव चानादितया अविनाशितया च वास्तवस्य त्वविभागस्य चाल्पकालस्थायितया मध्ये वाचारम्भणमात्रत्वं यदेव हि यदपेक्षया स्थिरं भवति तदपेक्षया सत्यं भवति यथा देहाद्यपेक्षया प्राणाः "प्राणा वै सत्यमि"तिश्रुतेः, तथा चाविभाग एव सत्य इति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपन्नेति। अनेनैव पूर्वपक्षसूत्रेण सर्वाः प्रलयाद्वैतश्रुतयो व्याख्याता वेदितव्या इति[1])इदानीं चतुःसूत्र्युक्ते पूर्वपक्षे सिद्धान्तमाह।

## यावद्विकारं तु विभागो लोकवत्

यदुक्तमाकाशस्योत्पत्तिरसंभवात् गौणीति तत्तदा स्याद्यदि प्रकृतिगुणात्मकस्य सूक्ष्माकाशस्योत्पत्तिः श्रुत्योच्येत पार्थिवादिपरमाणोरिव निरवयवत्वेन परमसूक्ष्माकाशस्य कार्यत्वासंभवात् नत्वेवं किं तु यावद्विकारं विकारपर्य्यन्तमेव वियदादीनां विभागः सृष्टिः श्रुतिषूच्यते न तु ब्रह्म प्रलीनपरमसूक्ष्मपर्यन्तमपि तेषां ब्रह्मण्यन्तर्भूततया ब्रह्मरूपेणैव कथनाल्लो-

(१) अयं पा० २ पु० ना०।

कवल्लोकव्यवहारानुसारेणेत्यर्थः यथा लोके दार्वादौ पूर्वस्थितादेव सूक्ष्माग्न्यादेर्निर्मन्थनादिना ऽभिव्यज्यमानानां विकाराणामेवोत्पत्तिर्व्यवह्रियते तथैव प्रकृत्येकदेशात्सूक्ष्माकाशादभिव्यक्तस्य शब्दादिचमस्य कार्य्याकाशस्यैवोत्पत्तिः श्रुतिषु व्यवह्रियते न तु सूक्ष्माकाशस्य दारुगतसूक्ष्माग्नेरिवेति । ननु सावयवत्वेनाग्निरुत्पत्तुमर्हति न त्वाकाशं निरवयवत्वेनावयवसंयोगाख्यकारणाभावादिति चेन्न(*अहंकारस्य तदनुगतसूक्ष्माकाशस्य चावयवत्वात् सजातीयस्यैवारम्भकत्वमिति चेन्न[1]) नियामकाभावाद्देहादीनां पाञ्चभौतिकत्वाच्च (*केवलविजातीयस्यैवारम्भकत्वानभ्युपगमात् केवलजलादिभ्यो घटाद्यनुत्पत्तेरिति एतेनाकाशात्तदनुगतवाय्वंशाच्च वा जलादिभ्यो घटाद्युत्पत्तिरित्येवं क्रमेण पञ्चभूतोत्पत्तिरवगन्तव्येति[2]) ननु तथा ऽपि पूर्वावस्थितस्यैवाकाशस्य(*स्वकार्यजननाय प्रतिबन्धनिवृत्तिः सहकारिसंपत्तिर्वा कल्प्यतां[3]) (*सहकारिमात्रत्वमेव शब्दाद्युत्पादने कल्प्यतामिति[4]) आकाशान्तरकल्पने गौरवादितिमैवं ।

शब्दस्पर्शविहीनं च रूपादिभिरसंयुतं ।
त्रिगुणन्तज्जगद्योनिरनादिप्रभवाप्ययम् ॥

---

(१) अयं पा० २ पु० ना० ।
(२) अं० पा० १ पु० ना० ।
(३) अयं पा० २ पु० ना० ।
(४) अयं पा० १ पु० ना० ।

इत्यादिवाक्यैर्न्यायवैशेषिकाद्यभ्युपगतेभ्यः शब्दादिलिङ्गकत्वेन व्यक्ताख्येभ्यः आकाशादिभूतेभ्यो ऽतिरेकेणाप्यव्यक्ताख्यानामणूनामाकाशस्य च सिद्धेः। अपि चैवं सति अवयविमात्रोच्छेदप्रसङ्गः अवयवानामेव जलद्याहरणादिकार्यजननाय स्वसंयोगविशेषस्यैव सहकारित्वकल्पनौचित्यात् अवयविकल्पने गौरवात्, अथैकत्वस्थूलत्वादिप्रत्ययानुरोधेनावयवी पृथक् सिद्ध्यतीति चेत्समानमाकाशे ऽपि (*घटाकाशगुहाकाशादीनां नानात्वोत्पत्तिप्रलयानां प्रत्यक्षप्रत्ययस्य पितृवैरित्वाभावात् तथा श्रुतिस्मृतिभ्यो ऽपि[1]) आकाशं प्रतिसर्गमुत्पादविनाशशालितया नानात्वेनाऽवगम्यते तथा प्रकृतिगुणापेक्षया स्थूलत्वेन चेति प्रामाण्यं च प्रत्यक्षशब्दयोरुभयोरेव समानमास्तिकानां प्रत्यक्षविरोधस्तु कारणव्युत्पादनेन निराकृत इति तस्मात्पृथिव्या इवाकाशस्यापि कारणसत्वेन प्रमाणसत्वेन वावयविरूपेणोत्पत्तिः समानेति। नन्वेवमात्मनो ऽपि यावद्विकारं काकार्य्यत्वं स्यादिति चेन्न, आत्मनोविकारित्वप्रतिषेधात् आत्मचैतन्यस्यानित्यत्वात्, प्रकृतेः कार्य्यत्वं तूत्तरसूत्रेण निराकरिष्यति तदेवं पृथिव्यादिवदेवाकाशो ऽपि नित्यानित्योभयरूप इति सिद्धं न्यायवैशेषिकाभ्यां चालिङ्गमव्यक्तं नाभ्युपगम्यते नित्येष्वेवाण्वादिषु गन्धादिलिङ्गाभ्युपगमात् व्यक्तानां प्रत्यक्षप्रामाण्यादिति

[१] अयं पा० २ पु० ना०।

न्यायसूत्राच्च अतस्ताभ्यां नित्य एवाकाशे शब्दमभ्युपगम्याकाशस्यानित्यत्वं पृथिव्यादिवत् नेष्यत इति-असाधारण्येन वाय्वाकाशयोरमृतत्ववचनं च कार्यविद्यामादायैवापेक्षिकं देवादीनाममृतत्ववचनवदिति सर्वं समञ्जसम् ।

## एतेन मातरिश्वा व्याख्यातः ।

एतेन वियदुत्पत्तिव्याख्यानेन वायुरप्युत्पन्नतया व्याख्यातः छान्दोग्ये वायूत्पत्तेरश्रवणे ऽपि तैत्तिरीयके तच्छ्रवणात् आकाशाद्वायुरिति । असम्भवाशङ्का तु वायूत्पत्तौ नास्त्येव सावयवत्वे विवादाभावात् अमृतत्वश्रुतिश्चापेक्षिकीत्युक्तम् । इतराकाशवन्नित्यत्वश्रुतिर्नास्त्येव तत्सत्वे चाकाशवदेव व्यक्ताभेदेनाविरोधो बोध्यः वायूत्पत्तिश्चाकाशक्रमेणेत्यप्यनेनैवसूत्रेण सिद्धमिति । ननु नित्यत्वेन श्रुतस्याप्याकाशस्योत्पत्तिवाक्यादुत्पत्तिस्वीकारे प्रधानस्याप्युत्पत्तिरस्तु तस्मादव्यक्तमुत्पन्नमित्यादिवाक्येभ्य इत्याशङ्क्याह ।

## असंभवस्तु सतो ऽनुपपत्तेः ।

सदेव सोम्येदमग्र आसीदित्यादिश्रुतिषु तत्प्रायः पिण्डवदीक्षितब्रह्माभेदेनोपन्यस्तं सूक्ष्मं जगत् सत् तस्य सतो ऽव्यक्तस्य परमसूक्ष्माकाशादिरूपगुणत्रयात्मकस्य प्रधानस्य तु संभव उत्पत्तिर्नास्ति कुतः अनुपपत्तेः, तस्य कारणाभावेन विकाररूपत्वासंभवा-

त्कारणकल्पने वा ऽनवस्थानादित्यर्थः अत एव पुरुषस्येव प्रधानस्याप्युत्पत्तिर्गौणीत्युक्तं कौर्मे संयोगलक्षणोत्पत्तिःकथ्यते कर्मजानयोरिति। महदादिविकाररूपेणानित्यत्वं च प्रधानस्यापीष्यत एव "क्षरं प्रधानममृताक्षरं हरः" इतिश्रुते.। आधुनिकास्त्विदं सूत्रं ब्रह्मण उत्पत्तिं प्रतिषेधतीत्याहुः तन्न, ब्रह्मण उत्पत्तेः श्रुत्यभावेनाप्रसक्तत्वात् आत्मनित्यत्वप्रतिपादनेनैव सुतरां ब्रह्मनित्यत्वस्य सेत्स्यमानत्वाच्च। छान्दोग्यानुक्ते वियद्वायुसृष्टी पूरयित्वा छान्दोग्यसृष्टावन्यं विशेषमाह।

## तेजोऽतस्तथाह्याह।

यद्यपि छान्दोग्ये सदाख्याद्ब्रह्मणस्तेजः सृष्टिः साक्षादेव श्रूयते तथापि अतो वायोस्तेजः संभवतीति ज्ञेयं कुतः, तथा हि तैत्तिरीयश्रुतिराह वायोरग्निरितीत्यर्थः छान्दोग्यश्रुतिश्च (*न क्रमपरा ब्रह्मप्रतिपादनमात्रपरत्वादितिभावः[1])।

## आपः।

अतस्तथाह्याहेत्यनुवर्तते तथा च यद्यपि श्रुत्यन्तरे "आप एवेदमग्र आसुरिति" जलस्यैव प्रथमं सृष्टिः श्रूयते तथापि अतस्तेजस एव आपो जायन्त इति बोध्यं कुतः तथाह्याह तैत्तिरीयश्रु-

(१) आकाशवायुद्वारकत्वेनोपपादनीयेति भावः इत्यधिकम् १ पु०।

तिरन्नेरपि इत्यर्थः उक्तश्रुतौ च पृथिव्यादिव्यपेक्षयैवाग्निशब्द उपपादनीय इति भावः एतेनापि एव ससर्जादौ तासु बीजमवासृजदितिमन्वादिस्मृतिष्वप्यादावित्यादिशब्दः पृथिव्याद्यपेक्षयैव बोध्यः।

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः।

अतस्तथाह्याहेत्यनुवर्तते अतो जलात्पृथिवी जायते तथा ह्याह सैव श्रुतिः"अद्भ्यः पृथिवीति"। ननु छान्दोग्ये"ता आप ऐक्षत बह्व्यः स्याम प्रजायेमहि ता अन्नमसृजन्त"इत्यनेन जलाद्व्रीहियवादिरूपस्यान्नस्योत्पत्तिरुक्ता तदेकवाक्यतया च तैत्तिरीयके ऽपि पृथिवीशब्दो ऽन्न पर एवोचितः सामान्यशब्दस्य विशेषपरत्वे लक्षणाद्यभावादित्याशङ्क्याह अधिकाररूपशब्दान्तरेभ्य इति सर्वश्रुतिषु जलात्पृथिव्येव बोध्या छान्दोग्ये अन्नशब्दस्य पृथिवीलक्षकत्वात् कुतः महाभूताधिकारात् तथा छान्दोग्ये"यत्कृष्णं तदन्नस्येति" सामान्यपृथिवीरूपस्य कथनात् अन्नरूपस्य शुक्लादेरपि दर्शनात् तथा"तद्यदपां शर आसीत्तत्समहन्यत सा पृथिव्यभवदि"ति श्रुत्यन्तराच्चेत्यर्थः। एवं तैत्तिरीयकश्रुतिमवलम्ब्य ब्रह्मणः सकाशात् क्रमेण पञ्चभूतोत्पत्तिरवधारिता। तत्रायं संशयः किं परमेश्वर आकाशमेव स्वयं सृजति वाय्वादींस्तु परत एव पितामहइव पुत्रद्वारा पौत्रं किं वा वाय्वादीनपि स्वयं

सृजति यथा कुलालः स्वयं कपालं सृष्ट्वा तेनैव कपालेन स्वयं घटमपि सृजति आकाशादि देवानां च करचरणादिवदीश्वराधिष्ठिततया स्रष्टृत्वोपपत्तेः कर्षणादिकर्मसु गोहलिकाद्युभयकर्तृकत्वदर्शनादिति तत्रोत्तरं पक्षं सिद्धान्तयति ।

## तदभिध्यानादेव तु तल्लिङ्गात्सः ।

स प्रकृतः परमेश्वरस्तत्तद्रूपेणावस्थितः सर्वं सृजति कुतः तदभिध्यानरूपात्तल्लिङ्गात् छान्दोग्यादौ सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मना ऽनुप्रविश्य नामरूपे व्याकरवाणीत्यादिरूपं यदीश्वरस्याभिध्यानं तदेव हि परेश्वरस्य स्वतः सर्वस्रष्टृत्वे लिङ्गं, यदि ह्याकाशादयो देवाः स्वातन्त्र्येणैव स्वस्वकार्य्यस्रष्टारः स्युरीश्वरस्तु हेतुकर्त्तृमात्रस्तर्हि न ब्रह्माण्डादिसृष्टये तत्तद्देवतान्तर्य्यामी भूत्वा स्वयं सृज्यामीति परमेश्वरस्य संकल्पः स्यात् अपि तु सर्जयिष्यामीत्येव स्यात् अतो ऽवगम्यते देवादीनामत्र प्रदादिवदेव पारतन्त्र्याद्ब्रह्माण्डादिसृष्टावपि परमेश्वरशेषतैव न स्यात् गोगमनादिषु गोपालवशतावदिति । अत्र तत्तेज ऐक्षतेत्याद्यभिध्यानं परमेश्वरस्य स्रष्टृत्वे लिङ्गमिति केचित्, तन्न तादृशाभिध्यानानां तेजआद्याभिमानिदेवतास्वपि संभवात् "अभिमानिव्यपदेशस्तु विशेषानुगतिभ्या"मिति सूत्रेणैव

तादृशवाक्येष्वभिमानिव्यपदेशस्योक्तत्वाच्च। न च प्रकरणात्तत्तेज ऐक्षतेत्यादिष्वपि परमेश्वर एवाभिध्यातेति वाच्यं, प्रकरणात्तेजआदिशब्दस्य बलवत्त्वादिति। वस्तुतस्तु सृजतीति क्रियापदाध्याहारं विनैवेदं सूत्रमित्थं व्याख्येयं, जन्माद्यस्य यत इति प्रतिज्ञातत्वाद्ब्रह्मणो भूतजन्महेतुत्वं प्रतिपाद्यानेन सूत्रेणान्तर्यामित्वादिभिः स्थितिहेतुत्वमाह तदपि ध्यानादित्यादिना। तथा चायमर्थः तद्यथोक्तमाकाशादिभूतपञ्चकं स एव परमेश्वर एव अन्तर्यामिरूपेण प्रविश्य शक्तिशक्तिमन्न्यायेन देहदेहिवदविभागेन कार्य्यकारणाविभागेन च स्थितः कुतः।

प्रवेशाभिध्यानरूपादीश्वराभेदलिङ्गादिति।

अतः सिद्धं सर्वान्तर्यामः सर्वाधारश्च सन्स एव सर्वं धारयतीति तदेवं भूतपञ्चकसृष्टिस्थितिहेतुत्वं ब्रह्मणः प्रतिपाद्य तत्प्रलयहेतुत्वं प्रतिपादयति।

## विपर्ययेण तु क्रमोऽत उपपद्यते च।

क्रमणं क्रमो गमनं ब्रह्मण्यप्यय इति यावत्स च प्रलयो विपर्ययेण जन्मनो वैपरीत्येन भवति कुतः अतः शब्दात्।

जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते।
ज्योतिष्यापः प्रलीयन्ते वायौ ज्योतिः प्रलीयते॥
वायुः प्रलीयते व्योम्नि तच्चाव्यक्ते प्रलीयते।
अव्यक्तं पुरुषे ब्रह्म निष्कले संप्रलीयते।

इत्यादि स्मृत्यनुमितश्रुतेरित्यर्थः । युक्तिमप्याह उपपद्यते चेति उपपद्यते चार्थवैपरीत्येन क्रमः मृद्घटादौ कारणेऽवेव कार्य्याणां लयदर्शनादित्यर्थः । ब्रह्मणि पञ्चभूतजन्मादिहेतुत्वं विचारितम् इदानीं अन्तः करणजन्मादिहेतुत्वं विचारणीयं तत्र संशयः किं सांख्यानामिव भूतसृष्टेः पूर्वमेव बुद्ध्यहङ्कारसृष्टिरुत भूतसृष्टेः पश्चादिति तत्र सिद्धान्तमाह ।

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ।

सदाकाशयोरन्तरा मध्ये विज्ञानमनसी जन्मादिप्रतिभवतः शङ्कानिराकरणमुखेनैवात्र हेतुं वच्यति विज्ञानं महदाख्याबुद्धिर्निश्चयात्मकवृत्तिमती मनश्च संकल्पादिवृत्तिमत् अनयोरेव चित्ताहंकारयोर्निवेशः एकस्यैवान्तःकरणस्य वृत्तिमात्रभेदेन प्राणादिवच्चतुर्धा विभागात् अन्तःकरणस्यैकत्वं च पञ्चवृत्तिमनोवदितिसूत्रात्वच्यते तत्रैव चेदं विचारयिष्यामः । सांख्ययोगयोश्च महतो ऽहंकारः अहंकारान्मन इति कार्य्यकारणभावो वृत्त्यभिप्रायेणोक्तस्त्विन्नेवान्तःकरणे प्रोक्तःधर्मिभेदे हि पातञ्जलभाष्ये व्यासवाक्यं विरुध्येत यथा क्लेशकर्मविपाकाशया मनसि वर्तमानाः पुरुषे व्यपदिश्यन्त इति तत्र बुद्धिधर्माणां भो-

गादीनां मनोधर्मत्वोक्तेरिति । अत्र शङ्कते ननु क्रमेणाकाशाद्यनन्तरमेव ते उत्पद्यन्ते कुतः तल्लिङ्गात्तत्तेजो ऽसृजतेति तेजः सृष्ट्यनन्तरमेव तत्तेज ऐक्षत बहु स्यामित्येवंरूपस्यान्तःकरणव्यापारस्य श्रवणात् एवं भूतान्तरे ऽपि भूतसृष्ट्यनन्तरमेव तदीक्षणस्य श्रवणादित्यर्थः । समाधत्ते न अविशेषादिति अन्तरोत्पत्तावपि लिङ्गानामविशेषात् अविशिष्टत्वात् एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणीत्यादिश्रुतौ पाठक्रमस्यान्तरोत्पत्तिलिङ्गस्य सत्त्वादित्यर्थः । मनःशब्देनात्रान्तःकरणसामान्यमेवोक्तं विशेषान्तराववनेन गोबलीवर्दन्यायानवकाशात्, नन्वेवं लिङ्गयोरविशेषादन्तरैवान्तःकरणोत्पत्तिरिति कथमवधार्यमितिचेत् अन्तरोत्पत्तौ यथोक्तलिङ्गद्वयस्यैवोपपत्तेः पूर्वोत्पन्नस्यान्तःकरणस्य पश्चाद्वृत्तिसम्भवात् पश्चादुत्पत्तौ च पाठक्रमाऽनुपपत्तेरिति अथ वा अन्तःकरणस्य पूर्वोत्पन्नत्वे ऽपीक्षणोपपत्त्यविशेषान्नेक्षणं लिङ्गमित्यर्थः किं च बाधकश्रुत्यभावेन स्मृत्या तदनुमितश्रुत्या चान्तरैवान्तःकरणस्य जन्मादिक्रममवधारणीयं, न चाकाशादिसृष्टिश्रुतिर्बाधिका भवति श्रुतिषु कुत्रापि समग्रसृष्टिकथनात् उपासनादिपरत्वेन श्रुतेः सृष्टौ तत्क्रमे वा तात्पर्य्याभावाच्च स्मृतौ तु सर्गप्रलयप्रक्रियायाः स्वपरत्वेन क्रमपरत्वेन च प्रकृते स्मृतेरेव बलवत्त्वादिति । यत्र च स्मृत्यारेवा-

न्योन्यविरोधः सृष्टावंशतो दृश्यते तत्र कल्पभेदेन विरोधः परिहर्त्तव्य इति तस्मात्सिद्धं सदाकाशयोर्मध्ये ऽन्तःकरणसृष्टिरिति उत्तरपादे चापरेषां प्राणेन्द्रियसूक्ष्मभूतानामपि सदाकाशयोरन्तराल एवोत्पत्तिं वक्ष्यति अतः श्रुतिस्मृत्योः सृष्टिप्रक्रिया ऽविरुद्धैव मन्तव्या येतु सूत्राणामन्यत्रार्थं परित्यज्य स्मृतिविरुद्धां सृष्टिप्रक्रियां श्रौतत्वेन परिकल्प्य सर्वां मन्वादिस्मृतिमप्रमाणीकुर्वन्ति तैरिदं महाभारतवाक्यं न श्रुतम् ।

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यतीति ।

नन्वेवं सदाकाशयोर्मध्ये ऽन्तःकरणसृष्टाङ्गीकारे "ऽन्नमयं हि सोम्य मन" इत्यादिश्रुतिविरोधस्तथा विराड्देहाद्धिरण्यगर्भस्य करणोत्पत्तिबोधकमन्वादिविरोधश्च यथा विराड्देहाधिकारे मनौ ।

उद्बबर्हात्मनश्चैव मनः सदसदात्मकं ।
मनसश्चाप्यहंकारमभिमन्तारमीश्वरम् ॥
इत्यादि तामिमामाशङ्कामपाकरोति ।

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ।

चराचरं शरीरमाश्रित्यास्यान्तःकरणजन्मादेर्व्यपदेशस्तु भाक्तो गौणः स्यात् । कथं तद्भावभावित्वात् तेषां चराचरशरीराणां भावैर्धर्मैर्हि ह्रासादि-

द्रूपैर्भोविरत्वाद्धर्मित्वाद्वृद्धिह्रासादिमत्वादित्यर्थः। तदे-
तत् श्रुत्या स्वयमेवोक्तं यथा एवं सोम्य ते षोडशा-
नां कलानामेका कलाऽतिशिष्टाभूत् साऽन्नेनोपसमा-
हिताप्रज्वालीत्तयैतर्हि वेदाननुभवस्यन्नमयं हि सो-
म्य मन इत्यादि अत्र हि मनस एका कलावशिष्टा
साऽन्नेन प्राज्वालीदित्येवोक्तं न तूत्पन्नमिति अतो
ऽन्ननिमित्तकवृद्ध्याख्यविकारादन्नमयं मन इत्युक्तम्
एवमेव"आपो मयः प्राणस्तेजोमयी वागि"त्यादिश्रु-
तेरप्यर्थो ऽवधारणीयः यच्चोक्तं मनुवाक्यं तत्रापि
उद्बबर्हेत्यनेन धात्वर्थमर्यादया संवर्द्धितवानित्येवा-
वगम्यत इति यदि च विराड्देहादेव हि हिरण्यगर्भ-
बुद्ध्यादीनामुत्पत्तिर्मन्वभिप्रेता स्यात् तदा।

मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया।
आकाशं जायते तस्मात्तस्य शब्दं गुणं विदुः॥

इत्यादिक्रमेण पञ्चभूतसृष्टयनन्तरमित्येषा सृ-
ष्टिरादित इति वाक्यशेषो विरुध्येत आदितः सर्गा-
दावित्यर्थः अतो मनआदिसृष्टिरेवमुख्या विराड्देहे
करणसृष्टिस्तु प्रवृद्ध्याभिव्यक्तिमात्रेण गौणीति विवे-
क्तव्यम्। एवमन्येष्वपि पुराणेतिहासादिषु द्विधा श्रू-
यमाणा प्राणकरणसृष्टिर्विवेक्तव्या इदं त्ववधेयम्
अन्तःकरणपरिमाणस्याचार्य्येणानुक्तत्वाद्दश्यर्हितेन
योगशास्त्रेणोक्तं व्यासदेवैश्च पातञ्जलभाष्ये ऽनुमतं
विभुपरिमाणमेवास्माभिरप्यभ्युपगन्तव्यम् अणवश्चे-

आगामिसूत्रेण च तन्मात्राणामेवोत्पत्तेर्वक्ष्यमाणत्वात् एवं च सति नित्यानित्योभयरूपमेव चाकाशमनो ऽपि भवति तत्र कारणाकाशवन्नित्यं विभुमनः घटमाकाशं चिदाकाशमाकाशं च तृतीयकं । द्वाभ्यां शून्यतमं विद्धि चिदाकाशं वरानने इत्यादिस्मृतेः, ईशोपाधिदृष्टान्तेन सामान्यत आत्मोपाधित्वावच्छेदेनैव लाघवाद्विभुत्वकल्पनौचित्याच्च, तदेव च गुणान्तरसंभेदेन दधिवत्कार्य्यं मनोरूपेणापि परिणमत इति मन्तव्यं केवलकार्य्यत्वे यावदात्मभावित्वाच्च न दोषः पुंस्त्वादिवत्त्वस्य सतो ऽभिव्यक्तियोगादित्यागामिसूत्रद्वयानुपपत्तेः केवलनित्यत्वे चैतस्माज्जायते प्राणो मन इत्यादिश्रुतिस्मृतिविरोध इति तच्च कार्य्यं मनोऽदृष्टादिवशादनियतपरिमाणं भवतीति मनसो विभुमध्यमाणुपरिमाणानि शास्त्रेषु अवगम्यमानान्युपपद्यन्ते।

इदानीं जीवस्याप्यन्तराल एवान्तःकरणद्वारकाभिव्यक्तिरूपा गौण्युत्पत्तिः परमेश्वरांशरूपेण विचार्य्या तदर्थं पादसमाप्तिपर्य्यन्तं जीवप्रक्रिया तत्रादौ जीवस्य उत्पत्तिं निराकरोति अंशत्वोपपत्तये वक्ष्यमाणमोक्षोपपत्तये च ।

## नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ।

अत्रात्मशब्दो न परमात्मपरः अंशत्वस्य वक्ष्यमाणत्वात् (*नेजं पर इतिवक्ष्यमाणसूत्राच्च तथा च

अनेन जीवेनात्मना अनुप्रविश्येति श्रूयमाणा[1]) आत्मा जीवो नोत्पद्यते कुतः अश्रुतेः जीवोत्पत्तेरश्रवणात् अनेन जीवेनात्मना ऽऽनुप्रविश्येत्यादिश्रुतिषु जीवानां पूर्वसिद्धताया एवावगमात्, ननु छान्दोग्ये जीवस्य सिद्धवन्निर्देशे ऽपि यथाऽऽ"ग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवैतस्मादात्मनः सर्व एत आत्मनो व्युच्चरन्ति बह्वीः प्रजाः पुरुषात् संप्रसूता"इत्यादिषु जीवोत्पत्तिः श्रूयत इत्याशङ्क्याह नित्यत्वाच्च ताभ्य इति ताभ्यः श्रुतिभ्यो जीवस्य नित्यत्वाच्च जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इत्यादिरूपाभ्य इत्यर्थः च शब्दात् श्रुत्युक्तबन्धमोक्षाद्यनुपपत्त्यादयो ग्राह्या उक्ता चोत्पत्तिरौपाधिकी अभिव्यक्त्या गौण्येवेति भावः ।

## ज्ञो ऽत एव ।

अत एव नित्यत्वादेव जीवो ऽज्ञः पूर्वानुभूतस्मर्त्ता भवति अनित्यत्वे हि पूर्वाननुभूतं स्तनपानेष्टसाधनत्वादिकं जातमात्रः स्मर्तुं न शक्नोति जन्मनः पूर्वमसत्वात् ततश्च स्तनपानादिप्रवृत्त्यनुपपत्तिरतो ऽज्ञत्वानुपपत्तिरतोज्ञत्वानुपपत्त्या ऽऽत्मा नित्यः सिद्ध्यतीत्यर्थः । यद्यपि संस्कारस्मृत्यादीनां चित्तधर्मत्वमेव तथापि य एव चेतनो ऽनुभावाख्यवृत्तिद्वारा यस्य विषयस्य द्रष्टा भवति स एव

(१) अयं पा० १ पु० ना० ।

स्मृतिद्वारा ऽपि तस्य द्रष्टा भवति नान्य इति नियमो ऽस्त्येवेति भावः। इदानीं पितापुत्रवद्दंशांशिभावस्योपपादकं ब्रह्मसरूपत्वं प्रतिपादयितुं जीवस्य विभुत्वकर्तृत्वादयो ऽशेषविशेषाः प्रतिपाद्यन्ते एवं ब्रह्माभिन्नस्य जीवस्य नित्यत्वे ऽपि ब्रह्मांशत्वेन पितापुत्रवद्धेतुहेतुमद्भावसंभवाज्जन्माद्यस्य यत इति प्रतिज्ञा सेत्स्यति तथांशांश्यभेदेनाप्यात्मैक्यं सेत्स्यति सेत्स्यति च ब्रह्मात्मत्वम् आत्मेति तूपयन्ति चेत्यनेन वक्ष्यमाणं सेत्स्यति च साम्येनाप्युपासिति तदादौ जीवस्याणुत्वं निराकर्त्तव्यं तच्च सूत्रत्रयात्मकमहावाक्येन जीवाणुत्वं शङ्कते।

## उत्क्रान्तिगत्यागतीनां।

ताभ्य इत्यनुवर्तते नाणुरिति च साध्यं तृतीयसूत्रे वक्ष्यति सूत्रदैर्घ्ये दुर्बोधता स्यात् इत्याशयेन पृथक्सूत्रद्वयेनादौ हेतुद्वयनिर्वचनमिति बोध्यं तथा चायमर्थः नापुरुषो जीव इति यावत् अणुः कुतः उत्क्रान्तिगत्यागतीनां ताभ्यः उत्क्रान्त्यादिश्रुतिभ्य इत्यर्थः न हि विभोरुत्क्रमणं गमनमागमनं वा संभवतीति भावः "स यदा अस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामती"त्यादिरुत्क्रान्तिश्रुतिः "ये चैके वा ऽस्माल्लोकात्प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ती"त्यादिर्गतिश्रुतिः "तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्म-

णा" इत्यादिरागतिश्रुतिरिति नित्यत्वव्यवस्थापनात्तु निरवयवत्वेन न मध्यमपरिमाणसंभव इत्याशयः हेत्वन्तरमाह ।

## स्वात्मना चोत्तरयोः ।

ताभ्य इत्यत्राप्यनुवर्तते इतश्च जीवो ऽणुः स्वात्मनोत्तरयोश्च ताभ्यः श्रुतिभ्य इत्यन्वयः अयमर्थः स्वात्मना स्वस्वात्मना सदाख्येन विभुना विशिष्टयोः संबद्धयोः उत्तरयोर्गत्यागत्योः प्रतिपादिकाः श्रुतयः "सति सति संपद्य न विदुः सति संपद्यामह" इत्याद्याः "सत आगत्य न विदुः सत आगच्छामह" इत्याद्याश्च न हीदं ब्रह्मणि गमनागमनं विभुत्वे सति जीवस्य संभवति द्वयोर्विभुनो संयोगविभागासम्भवान्न चान्तःकरणद्वारा भविष्यति अन्तःकरणे प्रमाणाभावादन्यद्वारकत्वकल्पने गौरवाच्चेति ।

## नाणुरतच्छुतेरिति चेन्नेतराधिकारात् ।

न नाणुरिति साध्यं पूर्वसूत्राभ्यां व्याख्यातं शेषांशश्चायं ननु जीवो ऽणुर्न भवति अतच्छुतेः अनणुश्रुतेः "अस्थूलमनण्वह्रस्वमिति आकाशवत्सर्वगतश्च नित्य" इति च श्रुतेरिति चेन्न, इतराधिकारात् तादृशश्रुतीनां परमात्माधिकारस्थत्वादिति इतश्च विभुत्वश्रुतयः परमात्मपरा एव न जीवपरा इत्याह ।

## स्वशब्दोन्मानाभ्यां च।

स्वस्य जीवस्याणुत्ववाचकशब्दात् एषो ऽणुरात्मा चेतसा वेदितव्य इत्यादिरूपात्तथा स्वस्य उन्मानात् अणुद्रव्यपरिमितत्वाच्चेत्यर्थः। बालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेय इत्यादिश्रुतिभिरित्यर्थः। ननु जीवस्याणुत्वे सति जलावगाहादौ सर्वदेशावच्छेदेन शैत्योपलब्धि र्न स्यादित्याशङ्कामपाकरोति।

## अविरोधश्चन्दनवत्।

यथा हि चन्दनबिन्दुः शरीरैकदेशसंबद्धो ऽपि शरीरव्यापिनमाह्लादं करोति तथैव देहैकदेशस्थो ऽपि जीवः शरीरव्यापिनीमुपलब्धिं करिष्यति नास्त्यत्र विरोध इत्यर्थः।

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि।

नन्ववस्थितौ जीवचन्दनयोर्वैशेष्यं विशेषो वर्त्तते चन्दनं हि प्रत्यक्षत एव ललाटाद्येकदेशे दृश्यत इत्यगत्या तत्र युक्तिविरुद्धमपि कल्प्यते आत्मा त्वतीन्द्रिय इत्यवस्थाने प्रत्यक्षाप्रत्यक्षत्वविशेषाज्जीवे युक्तिविरोधेन विभुत्वमेवोचितमिति चेन्न, आत्मनो ऽपि स्थानविशेषस्य श्रुतित एव भवद्भिरभ्युपगमात् तत्रैकदे-

शमात्रेण श्रुतिं पठति हृदि हीति हृदि ह्येष आत्मा
स वा एष आत्मा हृदीत्यादिर्हि श्रुतिर्वर्त्तत इत्यर्थः
ननु तथापि विषमो दृष्टान्तःचन्दनस्य सावयवत्वे-
नावयवद्वारा सकलदेहसंबन्धः संभवेत् आत्मा च नि-
रवयव इति शङ्कायां दृष्टान्तान्तरमाह ।

## गुणाद्वा लोकवत् ।

अविरोध इत्यनुवर्त्तते यथा प्रदीपादिरूप आ-
लोको गेहैकदेशस्थो ऽपि प्रकाशाख्येन रूपगुणेन
गेहं व्याप्नोति तथैव शरीरैकदेशस्थो ऽणुर्जीवो ऽपि
ज्ञानगुणेन देहं व्यापिष्यति नास्त्यत्र विरोध इत्यर्थः
ननु गुणानामाश्रयगमनं विना देशान्तरव्यापनं क्वा-
पि न दृष्टं स्वतो ऽक्रियत्वादिति तत्राह ।

## व्यतिरेको गन्धवत् ।

यथा गन्धस्य केवलगुणस्यापि चम्पकादिभ्यो
व्यतिरेकः दूरदेशगमनार्थं विभाग एवं दीपाद्यालोक-
स्य चैतन्यस्य च स्यादित्यर्थः अनुभवबलाद् गुणा-
नामपि क्रिया स्यादिति भावः ।

## तथा च दर्शयति ।

तथा च स्मृतिरपि अनन्तात्मनस्तस्य दीपवद्यः
स्थितो हृदीत्याद्या एकदेशस्थितस्येन्दोर्ज्योत्स्ना सर्व-
वगा यथेत्याद्या चैकदेशस्थितस्य चैतन्यगुणेन देह-

रिति दर्शयतीत्यर्थः तस्मादणुर्जीव इति सिद्धं तदेवमात्माणुत्वे प्राप्ते सिद्धान्तमाह ।

## पृथगुपदेशात् ।

जीवादणुरुपाधिभूतः पृथक् कुतः उपदेशात्म चानन्त्याय कल्पते सवा एष महानज आत्मा यो ऽयं विज्ञानमयः प्राणेष्वित्यादिश्रुतिभिर्जीवस्यानणुत्वोपदेशादित्यर्थः एवं नित्यः सर्वगतः स्थाणुरचलो ऽयं सनातन इत्यादिस्मृतयो ऽप्यात्मसामान्यस्यैव विभुत्वे प्रमाणानि बोध्यानि । नन्वेवमुत्क्रान्त्यादयो ऽणुत्वोन्मानहृदयप्रवेशादयश्च श्रुतिस्मृतिषूच्यमानाः कथमुपपद्येरंस्तत्राह ।

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ।

उपाधिभूतादणुगुणसारत्वात्तु अणुगुणव्यपदेशो जीवे यथा प्राज्ञ इत्यन्वयः अयमर्थः जीवोपाधिबुद्धिरणुः कार्य्यावस्थया परिच्छिन्नपरिमाणः तस्य चोपाधेर्ये गुणा उत्क्रान्त्यादयस्तत्सारमात्रगुणक एव जीवो लोकैर्दृश्यते व्यवह्रियते च स्वतो निर्गुणत्वात् अतो लोकानुसारेण श्रुतावपि जीवस्योत्क्रान्त्यादिव्यपदेशो न पुनर्जीवस्य स्वत उत्क्रान्त्यादिः श्रुत्या व्यपदिश्यते विभुत्वश्रुतिविरोधात् ।

पुमान्सर्वगतो व्यापी ह्याकाशवदयं स्थितः।
कुतः क्वासि क्व गन्तासीत्येतदप्यर्थवत्कथम् ॥

इत्यादिस्मृतिविरोधाच्चेति अयं च विभागः श्रुत्यैव स्पष्टीकृतः "यथा कस्मिन्नहमुत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजतेति तथा बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः बालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः स चानन्त्याय कल्पत इति अत्राद्यार्धेन बुद्धिसंपर्काज्जीवस्य परिच्छिन्नव्यवहारमुक्त्वा पश्चाद्द्वितीयश्लोकचतुर्थपादेन तस्य स्वत आनन्त्यं प्रोक्तं तच्च स्वत आनन्त्यमौपाधिकपरिच्छेदापगममात्रम्। अथ वा उपाधिशुद्ध्या तस्य परिच्छिन्नविकारविगमे सत्युपाधिनैव सह विभुत्वाभिव्यक्तिः न पुनः साधनसाध्यं दिगम्बराणामिव मन्तव्यं सावयवत्वादिना विनाशित्वप्रसङ्गादिति प्राज्ञवदिति यथा प्राज्ञ ईश्वरे माया परमाण्वाद्युपाधिगुणसारत्वेन मायादिगुणव्यपदेशः सोऽकामयत अणोरणीयान् तत्सृष्ट्वा तदेवानुप्राविशत् प्राज्ञेनात्मनान्वारूढ उत्सृज्य यातीत्यादिः तद्वदित्यर्थः तदेतज्जीवस्य गमनादेरौपाधिकत्वम्।

घटसंवृतमाकाशं नीयमाने घटे यथा।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥

इति श्रुत्या गतिश्रुतिरप्युपाधियोगादाकाशव-

दिति सांख्यसूत्रेण च स्पष्टमुक्तमत्र सूत्रे तद्गुणसारत्ववचनाज्जीवस्य कर्तृत्वादिप्रमुखः संसारोऽप्यौपाधिक इत्यायातम्। नन्वेवं यदि बुद्धिगुणा एव जीवस्य गुणाः न तु स्वतः सुखदुःखधर्माधर्मादिमत्वं तदा प्रलयादौ बुद्धेर्विनाशे सत्यात्मनो मोक्षापत्तिस्तथा च प्राकृतप्रलयानन्तरं पुनः सृष्टिर्न स्यात् मुक्तस्य च पुनरुत्पाद्युत्पत्त्या संसाराभ्युपगमे ऽनिर्मोक्षापत्तिरित्याशङ्कामपाकरोति ।

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ।

नोक्तदोषः कुतः, तस्य पृथक्शब्देनोक्तस्योपाधेर्यावदात्मभावित्वात्, उपाधेरन्तःकरणस्य यावदात्मावस्थित्यवस्थानात् नित्यत्वादिति यावत्, तद्दर्शनात् यावदात्मभावित्वश्रवणात्, कर्माणि विज्ञानमयश्च आत्मा परे व्यये सर्वं एकी भवन्ति कतम आत्माऽयोऽयं विज्ञानमयः प्राणेष्वित्यादिष्वित्यर्थः, (*विज्ञानमयो बुद्ध्यधीनाखिलव्यवहारः यतो वा यदात्मभावित्वमर्थाच्छ्रुत्योक्तम्, अदृष्टानाश्रयत्वेनामादेरनन्तत्वात्[१]) विज्ञानशब्दश्च बुद्ध्याख्यकरणवाच्यपि भवति विज्ञानमयो मनोमयः प्राणमय इत्यादौ मनआदिभिः सह पाठात्, उक्तवाक्यवोस्य विज्ञानशब्दो न चैतन्य-

---

(१) अर्थं प्रा० १ पु० ना० ।

वाची, न वा कादाचित्कसंबन्धेन विज्ञानमयत्वं विवक्षितं परमात्मन्यात्यन्तिकत्वसंभवादिति मोक्षधर्मादिस्मृत्यनुमितश्रुतिभ्यश्च बुद्धेर्नित्यत्वमवसेयं, यथा मोक्षधर्मे बुद्धिपुरुषौ प्रकृत्य।

सृजते च गुणानेक एको न सृजते गुणान्।
पृथग्भूतौ प्रकृत्यैतौ संप्रयुक्तौ च सर्वदा[१]॥

इति प्रलयमोक्षादौ च ज्ञानादिहेतुः संयोगविशेष एव नश्यति न तु[२] संयोगसामान्यमतः सर्वदा संप्रयोग उक्तः। नन्वेवमन्तःकरणस्य नित्यत्वेऽनिर्मोक्षः स्यादिति चेन्न, कर्मादिरूपनिमित्तकारणनाशे दग्धबीजवदवस्थितादन्तःकरणात्संसारासंभवेन मोक्षसम्भवात्, अन्तःकरणस्य च सत्त्वादिगुणान्तःपातिन इतरगुणवत्प्रलये विलयान्न तेन ब्रह्मणोऽद्वैतं तथा च श्रुतं प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्य इतिसूत्रेणेति बोध्यम्। नन्वेवमन्तःकरणस्य नित्यत्वे अन्तराविज्ञानमनसी इत्यादिसूत्रोक्तं बुद्धिजन्मानुपपन्नं तथा "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि" चेत्यादिश्रुतयः प्रकृतेर्महान् महतोऽहङ्कार इत्यादिस्मृतिर्यथानुपपन्ना इत्याशङ्कामपाकरोति।

**पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्।**

(१) महा० भी० अ० २४ ७ श्लो० २१।
(२) संस्कारमात्राणोऽपि इति १ पु० पा०।

दिति कथं विद्यायाः प्राधान्यमित्युच्यत इतिचेन्न तेषामप्यन्तरग्निहोत्रस्य ज्ञानाङ्गस्य वच्यमाणत्वात् बाह्यकर्मण एव परमहंसादिषु प्रतिषेधस्य वच्यमाणत्वादिति । तथा चाधिकारिभेदेनाचारद्वयमुपपादनीयमिति भावः । तत्श्रुतेरिति यदुक्तं तत्राप्याह ।

## असार्वत्रिकी ।

यदेव विद्यया करोति तं विद्याकर्मणी समन्वारभेते इत्यादिका कर्मशेषत्वतत्समुच्चयश्रुतिर्नसर्वभूमिकासाधारणी आत्मक्रीडा आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठ इति विद्याप्रकरणस्थश्रुत्या विद्यायां कर्माङ्गकत्वस्याप्यवगमात् । उपदर्शयितव्यइतिविरोधाच्चेत्यर्थः । नन्वेकस्या एव विद्यायाः कथमङ्गत्वं वा स्यादित्याशङ्कायामाह ।

## विभागः शतवत् ।

यथा शतं दीयतामित्येकवाक्योपात्तस्यैकस्यैव शतस्य संप्रदानभेदेनानेकधा विभागो भवति तथैव तरति शोकमात्मविदित्याद्येकवाक्योपात्ताया एकरूपाया अपि विद्यायाः अधिकारिभेदेन फलभेदेन चाङ्गत्वप्रधानत्वसमुच्चितत्वविभाग इत्यर्थः । एतेन समन्वारम्भणादितिसूत्रस्य प्रत्युत्तरमपि दत्तम् अधिकारिभेदेन समुच्चयस्यापि भावादिति । तद्वतो विधानादिति यदुक्तं तत्राह ।

## अध्ययनमात्रवतः ।

विधानादिति जैमिनिसूत्रादनुषज्यते गुरोः सकाशादर्थैः सह वेदग्रहणमध्ययनं तन्मात्रवतः पुरुषस्यैवोदाहृतश्रुत्या कर्मशेषतया विद्याविधानात् । न तूत्पन्नमात्रात्काराङ्कुरस्य तन्निष्ठाधिकारिणो योगारूढस्येत्यर्थः । अपरे तु अध्ययनं शब्दमात्रग्रहणं तथा च वेदान्तशब्दमात्रग्रहणापेत एव कर्मविहितं न तु तदर्थज्ञानवत् इति सूत्रं व्याचक्षते । तन्न । कर्माङ्गविद्यानामपि ब्रह्मविद्यामध्ये वेदान्तवर्गेषु पठितत्वेन सम्यक्कर्मिभिः कर्मकाण्डवत्समग्रवेदान्तस्यापि मीमांस्यत्वात् । ब्रह्मण्याध्याय कर्माणि सङ्गं त्यक्त्वा करोति य इत्यादिवाक्यैर्विशुद्धजीवब्रह्मविद्ययोरपि कर्माङ्गताश्रवणेन ब्रह्मकाण्डविचारस्याप्यावश्यकत्वाच्च । यत्तु ब्रह्मकाण्डविदुषः कर्मतत्त्वशक्तावधमकल्प इति यदप्युक्तं नियमाच्चेति तत्राप्याह ।

## नाविशेषात् ।

नियताच्चेति नोत्तरं कुतः अविशेषात् विद्यायाः पुरुषार्थहेतुतामभ्युपगच्छतामस्माकमपि विद्या गतया कर्मनियमाविशेषात् सर्वापेक्षा च यज्ञादिश्रुतेरितिवक्ष्यमाणसूत्रादित्यर्थः ।

## स्तुतये ऽनुमतिर्वा ।

यद्वा कुर्वन्नेवेह कर्माणि जिजिविषेच्छतं समाः एवं त्वयि नान्यथेतो ऽस्ति न कर्म लिप्यते नर इत्यादिश्रुतिर्विद्यास्तुत्यर्थमनुमतिरेव यावज्जीवं कर्म करोतु भवांस्तथापि एवं पूर्ववाक्योक्तविषया१वर्त्तमाने त्वयि नरे ऽपि न कर्म लिप्यते विद्यासामर्थ्यात् इति । अन्यथा कर्मलेपो नास्तीत्येवं विद्यास्तुतिपरेयमनुज्ञाश्रुतिर्न कर्मनियमपरेत्यर्थः । न कर्म लिप्यते नर इति लिङ्गात् । विद्याप्रकरणे कर्मविधानानौचित्याच्च प्रयोजनान्तरसम्भवे नियमविधिपरत्वकल्पने गौरवादागामिसूत्रवक्ष्यमाणहेतुभ्यश्चेति भावः । इतश्च स्तुत्यर्था कर्मनियमश्रुतिर्न नियमविधिरित्याह ।

## कामकारेण चैके ।

एके विद्वांसो मन्वादयः कामकारेणैव भोगापवर्गकामनयैव कर्म न तु निष्कामानां जीवन्मुक्तानामिति वदन्ति यथा मनुः ।

कामात्मता न प्रशस्ता न चैवेहास्त्यकामता ।
काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः ॥

इति एवमन्यवाक्यान्यप्युदाहार्याणि एकेषां मते हेतुमाह ।

## उपमर्दम् च ।

यतः कर्मोपमर्दमपि एके शाखिन आहुः एतद्वै तत्पूर्वे विद्वांसो ऽग्निहोत्रं न जुहवाञ्चक्रिर इ-

त्यादिना विद्वांसो जीवन्मुक्ताः तस्मान्न कर्म नियिमविधिरित्यर्थः । अथ वा इदं सूत्रद्वयमित्थं व्याचक्ष । यीयं विद्याशाः स्वातन्त्र्य हेतूनाह ।

## कामकारेण चैके ।

अपि स एके शाखिनः कामकारेण कर्त्तुः स्वेच्छयैवानियमं परित्यागं कर्मणः प्रतिपादयन्ति एतद्ध स्म वै तद्विद्वांस आहुः ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे एतद्ध स्म वै तत्पूर्वे विद्वांसो ऽग्निहोत्रं न जुहवांचक्रिर इत्यादिकाः तथा जडभरतादयो ऽपि कामकारेणैव कर्मानियमं कृतवन्त इत्यर्थः तस्मात्स्वतन्त्रापि विद्याऽस्तीति शेषः । ननु जडभरतादीनामन्तरग्निहोत्रादिकमस्तीत्युक्तं वक्ष्यते च तत्कथं कर्माभाव उच्यत इति चेन्न । तेषामग्नीन्धनाद्यभावेन बाह्यकर्माभावस्यैवोक्तत्वात् कर्मणः स्वातन्त्र्य समुच्चितत्वे वा विद्याङ्गशमदमाद्यनुरोधेन ब्रह्मकर्माग्नीन्धनादित्यागो न स्यात् शमादिभिः साध्यादिति एवं सूत्रान्तरे ऽपि उपमर्दं चैके शाखिनो विदधति यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेत् ज्ञानमात्मनि महति नियच्छेन्न यच्छेच्छान्त आत्मनि तमक्रतुः पश्यति वीतशोक इत्यादिनेत्यतो ऽपि विद्यैव प्रधानं पूर्वसूत्रोक्तरीत्येत्यर्थः ।

## ऊर्ध्वरेतःसु च शब्दे हि ।

ऊर्ध्वरेतःसु चाश्रमेषु कर्मोपमर्द्दस्तत्संकोचो ऽस्ति वाह्ययज्ञाद्यभावात्। कर्मणः प्राधान्ये वा तत् सङ्कोचे फलासम्भवादित्यर्थः। ननूर्ध्वरेतस आश्रमाः कुत्र श्रूयन्ते गृहस्थाश्रमस्यैव वेदेषु श्रवणादिति तत्राह शब्दे हीति हि यस्मात्तत्रोर्ध्वरेतसो योगिनो नैष्ठिकब्रह्मचारीवानप्रस्थसंन्यासिनः तेषां स्त्रीसम्भोगाभावेन योगाभ्यासेन च रेतसामस्खलनेनोर्ध्वमेवावस्थानात्। तथाविधाश्रमाः शब्दे वेदे तिष्ठन्ति यथा त्रयो धर्मस्कन्धा यज्ञो ऽध्ययनं दानमिति प्रथमः तप एव द्वितीयो ब्रह्मचार्य्याचार्य्यकुलवासी तृतीयो ऽत्यन्तमात्मानमाचार्य्यकुले ऽवसादयन् सर्व्वं एते पुण्यश्लोका भवन्ति ब्रह्मसंस्थो ऽमृतत्वमेति तपः श्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्ष्यचर्य्यां चरन्त एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीत्यादिषु वेद एवोर्ध्वरेतसो ऽप्याश्रमाः सन्तीत्यर्थः। तस्माद्विद्यायां स्वातन्त्र्यमप्यस्तीति।

## परामर्शं जैमिनिरचोदना चापवदति हि।

त्रयो धर्मस्कन्धा इत्यादिशब्देषु गृहस्थातिरिक्ताश्रमाणां परामर्शमनुवादमात्रं जैमिनिराचार्य्यो मन्यते न विधिं हि यस्मात् एतेषु चोदनाविधिशब्दो नास्ति तथा ऽपवदति च श्रुतिराश्रमान्तरं वीरहा

कर्मणां नियतानां च त्यागो नैव

तेषां कर्मफलत्यागः संन्यास इति कथ्यते ॥

इति योगियाज्ञवल्क्यादिवाक्यात् किं तु आ-श्रमान्तरविधिरेवाभ्युपगम्यते बाह्यकर्मत्यागस्यान्तरङ्ग-शमादिविरोधेन न्यायप्राप्त एवेति वक्ष्यामः। नन्वेवं संन्यासाश्रम शब्दार्थः क इति चेत्, प्राजापत्यां निरू-प्येष्टिं सर्ववेदसदक्षिणाम् आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहादित्यादिमन्वादिवाक्येभ्यो ऽवगतं स्वदेहे ऽग्न्याद्यारोपणपूर्वकं पुत्रादिकुटुम्बाभिमान-सत्यलोकादिपर्यन्तकर्मफलकामनात्यागपूर्वकं च गृ-हादिभ्यः प्रव्रजनमिति केवलकर्मफलत्यागरूपो गी-तासंन्यासश्च गृहस्थादिसाधारणो गीतास्वेवोक्ता-दावुक्तइति विभाग इति। ननु संन्यासि तथापि सो ऽन्धपङ्ग्वादिरूपकर्मानधिकारि वोचितः। अन्यथोक्तानामपवादश्रुतीनां तिचेन्न। जाबालोपनिषदि अथ परिव्राट् मुण्डो ऽपरिग्रहः शुचिरद्रोही भैक्षाणां भवति यद्यातुरः स्यान्मनसा वाचा वा सं न्या मन्त्राणामनुचिन्त इत्यत्र सामान्यसं विधाय पश्चात्पृथगेवानधिकारिणां संन्यासा च वीरहा वेत्यपवादश्रुतिः सा स्वात्मन्यग्न्यारोपणाद्यंशाभावविरुद्धैव अत एव गौतम तिषेध इतिसंज्ञा योगि

गित्वदोषो ऽपहृत इति अथ वा तथाविधा श्रुतयो वृथाकर्मत्यागपरा विष्णुपुराणादिमूलश्रुत्येकवाक्यत्वात् यथा विष्णुपुराणम्।

पुंसां जटाधरणमौण्ड्यवतां वृथैव।
मोघाशिनामखिलशौचनिराकृतानाम्॥
तोयप्रदानपितृपिण्डविवर्जितानाम्।
सम्भाषणादपि नरा नरकं प्रयान्ति॥

वृथा एकाग्रताप्रयोजनं विना मोघाशिनाम् अन्नस्यर्थ्यागादिकं विनैव भुञ्जतां गीतायां च।

एवं प्रवर्तितं चक्रं नानुवर्त्तयतीह यः।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति॥

इन्द्रियारामो ऽसंयमीत्यर्थः अतो वृथाकर्मत्यागस्यैव निषिद्धतया आत्मयोगिनो विक्षेपककर्माभावे ऽप्यक्षतिरुक्ता गीतायां।

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च सन्तुष्टस्तस्य कार्य्यं न विद्यते॥

इत्युत्तरवाक्येन एतेन जैमिन्युक्तावचोदनापवादो प्रोक्तस्य वृथाकर्मत्यागपरावेव अन्यथा अग्निहोत्रं जुहुयाच्छिरः इत्युक्तश्रुतिविरोधादिति बोध्यं। जैमिनेरन्यार्थपरामर्षवचनं चापाततो गार्हस्थ्यप्रशंसामिति। इदानीं संन्यासाश्रमे मिताक्षराद्युक्तानि प्रामाणि प्रदर्श्यन्ते एकदण्डो त्रिदण्डो चेति बौधायन

चतुर्थमाश्रमं गच्छेद्ब्रह्मविद्यापरायणः ।
एकदण्डी त्रिदण्डी वा सर्वसङ्गविवर्जितः ॥

इति चतुर्विंशन्मतं। मुण्डः शिखी वेति गौतमः। मुण्डोऽममोऽपरिग्रह इति वशिष्ठः शिखान्केशान्निकृत्य विसृज्यते यज्ञोपवीतमिति काठकः ।

कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः ।
केशान् यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः ॥

इति बाष्कलः । अथ यज्ञोपवीतमप्सु जुहोति भूःस्वाहेति अथदण्डमादत्ते सखे मा गोपायेति परिशिष्टं कषायी मुण्डस्त्रिदण्डीकमण्डलुपवित्रपादुका सनकथामात्र इति देवलः बौधायनस्तु स्त्रीणामपि संन्यासमाह शौचाद्यर्थं कमण्डलुसहायश्चरे ( एका राम: प्रव्रजितान्तरेणासहायः संन्यासिनीभिस्तिस्र भिश्च स्त्रीणां चैक इत्यनेन । एतानि मिताक्षराधृतवाक्यानि एवं ।

नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ।
सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ॥
समासेनैव कौन्तेय निष्ठाज्ञानस्य या परा ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ।
यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः ॥
आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान्

इत्यादीनि च गीतामन्वादिवाक्यान्यपि सं

सप्रतिपादकानि द्रष्टव्यानि संन्यासेन फलसंन्या-
सेन पूर्वोक्तेन नैष्कर्म्यसिद्धिं समाध्यवस्थायोग्यतां ध्या-
नभिक्षुतामिति यावदिति। ध्यानभिक्षुश्च परमहंस
इत्युक्तो यथा विष्णुधर्मे।

चतुर्विधा भिक्षवः स्युः कुटीचकबहूदकौ।
हंसः परमहंसश्च श्रेयांश्चैषां यथोत्तरम्॥

इत्यादिना कुटीचकादित्रयाणां विशेषमुक्त्वाह

आत्मनिष्ठः स्वसंसक्तः त्यक्तसर्वपरिग्रहः।
चतुर्थो ऽयं महानेषां ध्यानभिक्षुरुदाहृतः॥

इति। एवं कूर्मपुराणादिष्वपि चतुर्विधं सन्या-
समुक्त्वा परमहंससंन्यासो ध्यानमात्रसाधनो विदुषा-
मेवोक्तः। अतो ज्ञाननिष्ठार्थं कोमलकण्टकवदुत्पन्नसा-
क्षात्कारस्यैव परमहंससंन्यासाधिकारो न तु विविदि-
षोरिति विवदिषयो परमहंसाश्रमो न शास्त्रार्थः
यदि च विविदिषाशब्देन ज्ञाननिष्ठैवोच्यते तदा
तु विविदिषोरप्ययं संन्यास इष्यत एवेति बोध्यं।

## स्तुतिमात्रमुपादानादिति चेन्ना-पूर्वत्वात्।

ननु प्रव्रजन्तीतिवाक्यम् एतमेवं प्रव्राजिनो लोक
मिच्छन्त इत्युपादानात् लोकस्तुतिमात्रे स्तुतिपरत्वे
न वाक्यसामर्थ्ये प्रव्रजन्तीत्यनुवादमात्रस्य ·

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥

इत्येनेनात्मयागसमुच्चितं ज्ञानमुक्तम् आत्मनि स्वदेहे सर्वान्देवान् यजतीत्यात्मयाजी स्वशरीरे सर्वदेवारोपश्चोक्तो मनुयाज्ञवल्क्याभ्याम् ।

सर्वमात्मनि सम्पश्येत्सच्चासच्च समाहितः ।
सर्वं ह्यात्मनि सम्पश्यन्नाधर्मे कुरुते मतिम् ॥
आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम् ।
आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम् ॥
खं सन्निवेशयेत् खेषु चेष्टनस्पर्शने ऽनिलं
नक्तिदृष्ट्योः परं तेजः स्नेहे योगं च मूर्तिषु ॥
मनसीन्दुं दिशः श्रोत्रे क्रान्ते विष्णुं बले ऽरं ।
वाच्यग्निं मित्रमुत्सर्गे प्रजने च प्रजापतिं
प्रशासितारं सर्वेषामणीयांसमणोरपि
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् ।
एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् ।
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥
एष सर्वाणि भूतानि पञ्चभिर्व्याप्यमूर्तिभिः ।
जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत् ।
एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना ।
स सर्वसमतामेत्य ब्रह्माभ्येति परं पदमित्यनेन ॥

ननु स्वशरीरे ऽग्न्यादयो देवास्तिष्ठन्त्येव तेषामा-

रोपणं किमर्थं श्रुत्यादिभिरुच्यते लोकाग्नौनुदराग्नौ समारोपयेदित्यादिना खं सन्निवेशयेत् खेष्वित्यादिना चेति चेन्न । बाह्ये वासनात्यागदोषपरिहारार्थत्वात् बाह्यानामभ्यन्तरारोपणं हि समष्टिव्यष्टिभेदेन बाह्याभ्यन्तरूभययाग एव स्यादिति । यत्तु अत एव चाग्नीन्धनाद्यनपेक्षेति सूत्रेण मोक्षाख्ये फले सर्वकर्मापेक्षा प्रतिषिद्धा अनेन सूत्रेण विद्यायाः स्वोत्पत्तौ विविदिषामात्रद्वारा सर्वकर्मापेक्षोच्यत इत्यविरोध इति प्रलपनं तन्न ।

बाह्यमाभ्यन्तरं चेति द्विविधं मुक्तिसाधनम् ।
बाह्यं बहिः क्रियाभिश्च यत्तद्विहितसाधनैः ॥
अभ्यन्तरं च मनसा विध्यनुष्ठानमात्मनि ।
तावदन्यतमं कुर्यान्नित्यं कर्म यथा विधि ।
अपि ना ऽज्ञानिना वापि यावद्देहस्य धारणं
वर्णाश्रमप्रोक्तं कर्त्तव्यं कर्म मुक्तये ॥

इति वसिष्ठादिवाक्यैर्ज्ञानोत्तरमपि कर्म… नेन फलनिष्पत्त्यर्थमपि विद्यायाः कर्मापेक्षाव… उक्तविभागे प्रमाणाभावाच्च । तथा सहकारित्वेन गामिसूत्रविरोधाच्च । किं चैवं सति पूर्वसूत्रे का… पेक्षेत्यत्रोच्येत तथोत्तराध्याये अग्निहोत्रादि तु त्कार्य्यायैवेति सूत्रे कार्य्यपदमपि व्यर्थं स्यात् त… दित्युक्त्यैव ज्ञानहेतुत्वलाभसम्भवादिति । एतच्च …न्त्वसूत्र्यां विस्तरेण दूषितमिति दिक् । ननु य…

विद्यायाः सहकार्य्यंङ्गकर्म्मं तदा कथं बाह्यकर्म्मं त्व
क्याज्यं तत्राह ।

**शमदमाद्युपेतः स्यात्तथापि त-
द्विधेस्तदङ्गतया तेषामवश्यानुष्ठेय-
त्वात् ।**

यद्यपि विद्यायां यज्ञाद्यपेक्षास्ति तथापि विद्या-
भ्यासी यज्ञाङ्गभूताग्न्यादिपरित्यागेनापि शमदमा-
द्यु । एव स्यात्कुतस्तद्विधेस्तदङ्गत्वात् तस्मादेवं
वित् शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा-
त्मन्येवात्मानं पश्येदिति शमादिविधेः शमादीनां वि-
द्याङ्गत्वात् । नन्वग्न्यादीनां शमादीनां च विद्याङ्ग-
त्वाविशेषात्कथं शमाद्यनुरोधेनाग्न्यादीनामेव त्यागो
न पुनर्वैपरीत्यमिति तत्राह । तेषामवश्यानुष्ठेयत्वा-
दिति । एकाग्रतायामन्तरङ्गत्वेन शमादीनामवश्या-
नुष्ठेयतया तदनुरोधेन विक्षेपकस्याङ्गाङ्गभूतस्या-
ग्न्यादेरेव त्यागो न शमादीनामित्यर्थः । गुणलोपो न
गुणिन इति चात्र न्यायो मूलमिति भावः । स्वकीय-
स्नानपानाहारादिषु चात्मयागः कर्त्तव्य एव विक्षेप-
दोषाभावादावश्यकत्वाच्च । तथा च गौतमीयतन्त्रे ।

केवलं सततं श्रीमच्चरणाम्भोजभाजिनाम् ।
संन्यासिनां मुमुक्षूणां मानसः कथितो विधिः ।

इति एतेन मानसोपचारैरीश्वरपूजा यतीनां चतुर्विधानामप्यस्तीति मन्तव्यम्। कर्मत्यागस्त्वहं न कर्त्तेति चिन्तनमेव नैव किं चित्करोमीति युक्तो मन्येत तत्त्ववित् कुर्य्यात्कर्मसन्न्यासचिन्तनमिति गीतायोगियाज्ञवल्क्यादिभ्य इति बोध्यम्। यत्तु सर्वकर्माणि बाह्याभ्यन्तराण्यविशेषेण संन्यस्य सर्वथैव त्यक्त्वा श्रवणं कुर्य्यादित्याधुनिका विधिं कल्पयन्ति तत्पञ्चसूत्र्यामतिविस्तरेण निराकृतम्। तस्मात्कोमलकण्टकन्यायनात्यन्तज्ञानेनैव विरक्तेन मुमुक्षुणा योगारूढेन ज्ञाननिष्ठार्थं शमदमादिरक्षार्थे विक्षेपकाणि कर्माङ्गानि न्यायतः परित्यज्य समाधिना परवैराग्यपर्यन्तआत्मसाक्षात्कारः कर्तव्य इत्येव शास्त्रार्थः न पुन रज्ञेनायोगारूढेन वा कर्माणि त्याज्यानि वृथा कर्मत्यागे पातित्यात्। तेन चापरवैराग्ये सति विदण्डसन्न्यास एव कर्तव्यः स चाश्रममात्रमिति। तदेवं विद्यां यानि सन्न्यासाग्न्यादित्यागयज्ञादीनि शमदमादीनि च विचारितानि इदानीं योगिनां देहधारणाय भिक्षा विचार्य्यते।

## सर्वान्नानुमतिः प्राणात्यये तद्दर्शनात्

"न ह वा एवं विदि किंच नानन्नं भवति न ह्वा अस्यानन्नं अग्धं भवति नानन्नं प्रतिगृहीतं भवति श्वपाकेष्वपि भुञ्जानो ध्यानेनैव तु लिप्यते" इत्यादिश्रु-

तिस्मृत्योर्योगिनां या सर्वान्नानुमतिः सा प्राणात्यय एव योगाभ्यासासामर्थ्यकाल एव प्रत्येतव्या। न तु शक्तिकाले। कुतः तद्दर्शनात्। मटचीहतेषु कुरुष्वित्यादिछान्दोग्ये दुर्भिक्षोपद्रवाच्चाक्रायणस्य प्राणात्ययदशायामेवं हस्तिपकोच्छिष्टकुल्माषभक्षणश्रवणात् सुलभत्वेन च तस्यैव हस्तिपकोच्छिष्टजलाभक्षणां वेत्यर्थः.

## अबाधाच्च।

आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः। स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इत्यादिवाक्यानां शक्तिमत्त्वे बाधायोगाच्चेत्यर्थः शक्ताशक्तभेदेन वाक्यद्वयोपपत्तिरिति भावः।

## अपि च स्मर्य्यते।

स्मर्य्यतेऽपि च सर्वान्नानुमतिः प्राणात्यय एव विद्वदविद्वत्साधारण्येन यथा।

जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥

इत्यादिभिरित्यर्थः। नन्वेवं श्वपाकेष्वपि भुञ्जानो ध्यानी नैव तु लिप्यत इत्यादिवाक्ये ध्यानीत्यादिविशेषणं व्यर्थं प्राणात्यये सर्वेषामेव दोषाभावादिति चेन्न। ध्यानीत्यादिविशेषणानां योगिनः प्राणात्ययवत्। वाख्यानवधानादिनिमित्तकस्य दुर्भोज-

नस्यापि पापाजनकत्वप्रतिपादनेन साकल्यात् तथा हि लिङ्गं ।

नास्ति विद्याविशुद्धानां प्रायश्चित्तादिकल्पना ।
विशुद्धा विद्यया सर्वे ब्रह्मविद्यापरायणाः ॥

इति अयोगिनां तु प्राणात्ययेऽपि उद्योगाभावानवधानादिनिमित्तकदुर्भोजनात् पापं भवत्येव अयोगिनामनुद्योगे पापश्रवणात् अज्ञानकृतपापानामपि प्रायश्चित्तश्रवणाच्चेति ।

## शब्दश्चातोऽकामकारे ।

कामकारप्रतिषेधे शब्दः श्रुतिरप्यस्ति यथा कठानां विद्याप्रकरणे तस्माद्ब्राह्मणो सुरां न पिबेदिति विद्याया अङ्गान्तरं विचार्य्यते ।

## विहितत्वाच्चाश्रमकर्मापि ।

सर्वाश्रमैर्विजिज्ञास्य इत्यादिभिर्विद्यासाधनतया विहितत्वाच्चाश्रमकर्मापि विद्यया ऽपेच्यत इति शेषः सर्वापेक्षा च यज्ञादिश्रुतेरितिसूत्रेणाश्रमविशेषायन्वितसामान्यकर्माण्यनित्यानि वा विचारितानि इत्यपौनरुक्त्यमाश्रमकर्माणि च मन्वादिषु द्रष्टव्यानि । ननु विद्याया यदाश्रमकर्मापेक्षणं यज्ञाद्यपेक्षणं चोक्तं एतत्किं स्वनिष्पत्त्यर्थमेव उत मोक्षफलार्थमपीति संशये निर्णीयते ।

## सहकारित्वेन च।

कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते॥

इत्यादिवाक्येभ्यो विद्यया स्वनिष्पत्त्यर्थं कर्मापेक्षते किं तु सहकारित्वेन च स्वफलोपकार्य्यङ्गतया चापेक्ष्यते विद्यां चाविद्यां च यस्तं वेदोभयं सह।

उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः।
तथैव ज्ञानकर्मभ्यां लभ्यते परमं पदम्॥

इत्यादिवाक्येभ्य इत्यर्थः। फलं प्रति च कर्मणामुपकारविशेषं स्वयं तृतीयसूत्रेण वक्ष्यति। आधुनिकास्तु सहकारित्वेन चेत्यस्य स्वकारणत्वेन चेत्यर्थः तथा च यज्ञादीनि विद्योत्पत्तावेव कारणानि नतु मोक्षे ऽपि न कर्मणा न प्रजया न धनेन त्यागेनैकेऽमृतत्वमानशुरित्यादिवाक्यै र्मोक्षस्य कर्मजन्यताप्रतिषेधादित्याहुः तन्न। परमर्षिसूत्रे त्वत्कल्पितसिद्धान्तानुसारेण सहकारिशब्दस्य स्वकारणे लक्षणानौचित्यात् चकारवैयर्थ्याच्च। फलवत्सन्निधावफलं तदङ्गमित्यङ्गलक्षणादङ्गभूतस्य कर्मणो मोक्षफलप्रतिषेधस्योपकारकत्वे ऽप्यविरुद्ध एवेति। स्वोत्पत्तये स्वफलाय च विद्यया अवश्यम् कर्मापेक्षत इत्युक्तं तत्र किं विदुषां योगिनां त एव श्रुतिस्मृतिप्रसिद्धाश्चत्वार आश्रमाः उत पञ्चम आश्रमो ऽस्ति यो-

गिनामिति संशयः तत्र अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टम् अविमुक्तमाश्रितो भवत्यत्याश्रमीत्यादिश्रुतिभ्यो योगाश्रमो ऽतिरिक्त इति पूर्वपक्षे सिद्धान्तमाह ।

## सर्वथापि त एवोभयलिङ्गात् ।

सर्वथा योगे ऽयोगे वा त एव प्रसिद्धाश्चत्वार एवाश्रमाः प्रत्येतव्याः कुत उभयलिङ्गात् । श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च । श्रुतौ हि त्रयो धर्मस्कन्धा इत्यादिनाश्रमत्रयमुक्त्वा पश्चाच्चतुर्थ उक्तो ब्रह्मसंस्थो ऽमृतत्वमेतीति ब्रह्मसंस्थस्य योगीति योगिनश्चतुर्थ एवाश्रमो ऽनुमीयते मन्वादिस्मृतौ चाश्रमचतुष्कस्यैव कथनात् पञ्चमो नोपपद्यत इति वचनाच्च । योगिनामपि त एवाश्रमा इत्युन्नीयत इत्यर्थः । कष्टतश्चैतदुक्तं कूर्मपुराणे ऋषय ऊचुः ।

भगवन्देवताविष्णु हिरण्याक्षनिषूदन ।
चत्वारो ह्याश्रमाः प्रोक्ता योगिनां तु क उच्यते ॥

कूर्म उवाच ॥

सर्वकर्माणि सन्यस्य समाधिमचलं स्थितः ।
य आस्ते निश्चलो योगी समाधिमचलं स्थितः ॥

आसीन पञ्चम इति अतो योगिनां चतुर्थ एवाश्रमो निर्णीयते योगाश्रमे चात्याश्रमशब्दो नातिरिक्ताश्रमाभिप्रायेण प्रयुज्यते किं त्वतिशयिता-

श्रमाभिप्रायेणैव योगाश्रमस्य परमहंसस्य सर्वाश्रमश्रेष्ठत्वात् । अथ योगिनां परमहंसानां को ऽयं मार्ग इत्यादिश्रुतेरपि परमहंसरूपाः सन्न्यासिन एव योगिनो नातिरिक्ता इति सहकारित्वेन चेत्युक्तं तत्राह केनोपकारेण मोक्षे विद्यामुपकरोति कर्मेत्याकाङ्क्षायामाह ।

## अनभिभवं च दर्शयति ।

कर्मणामुपकारं च विघ्नानभिभवं श्रुतिर्दर्शयति "एष ह्यात्मा न नश्यति यं ब्रह्मचर्य्येणानुविन्दते विद्यां चाविद्यां च यस्तद्वेदोभयं सह अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत" इत्यादिरित्यर्थः न नश्यति विघ्नविहतो न भवति अविद्यया कर्मणा मृत्युं पुरुषार्थघातकं विघ्नं तीर्त्वा विद्यया मोक्षं प्राप्नोतीति श्रुत्यर्थः । ननूत्पन्नज्ञाननिष्ठस्य कीदृशः प्रतिबन्धः कर्मणा परिक्रियत इति चेत् नित्यकर्माकरणजप्रत्यवायेन मिथ्याज्ञानवासनाक्षये प्रारब्धभोगसमाप्त्यादौ च प्रतिबन्धो नित्यकर्मणा परिक्रियते तत्प्रतिबन्धकप्रत्यवायानुत्पादात् । न च ज्ञानिनां प्रत्यवायः कथं स्यादिति वाच्यम् । ज्ञानिनामपि तथा स्वाच्छन्द्यात् प्रत्यवायोत्पत्तेः कर्मविध्यनुमेयत्वात् ।

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न पराम् गतिम् ॥

यस्तु विद्याभिमानेन वेदमार्गप्रवर्त्तनम् ।
छलजात्यादिभिर्जह्यात् स महापातकी भवेत् ॥

इत्यादिवाक्येभ्यश्चेति । इदानीमनाश्रमाणां विधुरादीनां विद्यायामधिकारो ऽस्ति न वेति विचार्य्यते ।

## अन्तरा चापि तु तद्दृष्टेः ।

अन्तरा आश्रमयोरन्तरालवर्त्तिनां विधुरादीनामपि तु तद्विज्ञानं मन्तव्यं कुतः दृष्टेः रैक्ववाचक्नवीप्रभृतीनामनाश्रमिणामपि विद्याभ्यासदर्शनादित्यर्थः ।

## अपि च स्मर्य्यते ।

स तमुत्सृज्य देहं स्वं धारयन् ब्रह्म केवलम् ।
आत्मानमालोकयति मनसा प्रहसन्निव ॥
इमं धर्मं समास्थाय ऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्राः स्ते ऽपि यान्ति परां गतिम् ॥
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्त्तमानो ऽपि स योगी मयि वर्त्तते ॥

इत्यनुगीतादौ दैवादशक्त्या वा सर्वथा आश्रमधर्मादिराहित्येन वर्त्तमानस्याप्यैकात्म्यविद्या स्मर्य्यते ऽपीत्यर्थः । आश्रमधर्मकर्त्तव्यस्योपकारस्य चान्यत एव सम्भव इत्याह ।

विशेषानुग्रहस्य।

स्मर्यत इत्यनुमीयते। विधुरादीनामपि तीर्थसेवाजपादिभिर्विशेषधर्मैर्विद्याया अनुग्रहस्य उपकार प्रतिबन्धनिवृत्तिरूपस्मर्यत इत्यर्थः।

अकर्तुमसमर्थस्य जुहोतियजतिक्रियाः।
स्नानध्यानजपैर्होमैरात्मानं पावयेद्बुधः॥
जपेनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः।
कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते॥

इत्यादिवाक्येभ्य इति भावः। होमैरात्मयोगैः मैत्रो ऽहिंसक इति। तस्माद्विधुरादिभिः स्वधर्मचरणाद्यमैरपि यथाशक्ति स्नानजपनमस्कारभगवन्नामसङ्कीर्त्तनादिधर्मैर्विशेषानुगृहीताविद्या ऽनुष्ठेया गुणलोपो न गुणिन इति न्यायादिति सिद्धम्। वस्तुतस्तु यथाश्रुत एव सूत्रास्यायमर्थः। अन्तरालवर्त्तिष्वपि परमेश्वरस्य विशेषानुग्रहो ऽतिशयानुग्रहो ऽपि स्मर्यते भक्त्यावेशात् यथा।

नालं द्विजत्वं देवत्वमृषित्वं वासुरात्मजाः।
प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता॥
प्रीयते ऽमलया भक्त्या हरिरन्यद्विडम्बनम्।
पुनाति भगवद्भक्तिश्चाण्डालो ऽपि यदृच्छया॥
अपि चेत्सु दुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि स इति

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ।

अतो ऽन्तरालवर्तित्वादितरत् आश्रमित्वं तु ज्यायो मुख्यकल्पः लिङ्गाच्च आत्मक्रीडा आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठ इतिलिङ्गाच्चेत्यर्थः ।

अत्र हि क्रियावत्त्वस्योत्कृष्टत्ववचनात्तदुपयोग्याश्रमरूपो ऽप्युत्कर्षो ऽनुमीयत इति स्मर्यत इति च शब्देन समुच्चीयते सा च स्मृतिः ।

सन्न्यासः कर्मयोगश्च निश्रेयसकरावुभौ ।
तयोस्तु कर्मसन्न्यासात्कर्मयोगो विशिष्यते ॥
अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः ।
संवत्सरमनाश्रमी स्थित्वा कृच्छ्रमेकं चरेदिति ॥

इदानीमिदं विचार्य्यते अधराश्रमं गतस्य पूर्वधर्मचिकीर्षादिना तत्पूर्वाश्रमगमनमस्ति न वेति तत्रादौ स्वमतमाह ।

## तद्भूतस्य नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ।

तदाश्रमीभूतस्यातद्भावो ऽर्थात्तत्पूर्वाश्रमिभावो नास्ति कुतः जैमिनेरप्यङ्गीकृतेभ्यो नियमात्तद्रूपाभावेभ्यो हेतुभ्यः तत्र नियमः अरण्यमियात्ततो न पुनरियादित्यादिश्रुत्युक्तः । अतद्रूपं चातद्रूपत्वमवरोहकथनमिति यावत् । अभावश्च शिष्टाचारस्येति एते-

भ्यो हेतुभ्यो ऽधराश्रमात् त्यक्ताश्रमावरोहो नास्तीत्यर्थः । तेषां प्रायश्चित्तानन्तरमप्यवरोहो नास्ति प्रायश्चित्तस्यैवाभावादित्याह ।

## न चाधिकारिकमपि यजनानुमानात्तदयोगात् ।

पूर्वमीमांसायां अधिकारलक्षणे षष्ठाध्याये प्रोक्तमाधिकारिकमवकीर्णिप्रायश्चित्तं तदपि नैष्ठिकादेर्न भवति । कुतः पतनानुमानात् । अत्यन्तपतनस्मरणेन तदयोगात् यथा ।

आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते मतः ।
प्रायश्चितं न पश्यामि येन शुध्येत्स आत्महा ॥

इत्यादिरित्यर्थः । एके तु प्रायश्चित्तस्य भावमाहुरित्याह ।

## उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ।

एके तु उपपूर्वं पातकमुपपातकमत्र मन्यन्ते अतो ऽशनवन्मधुमासांदन इवात्रापि प्रायश्चित्तस्य भावमाहुः कामतो महापातकस्यैव हि मरणान्तं प्रायश्चित्तं नोपपातकेष्विति । तदुक्तमिति प्रायश्चित्तं च तैरुक्तं स्मृतिषु यथा वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रं चरित्वा महाकृच्छ्रं वर्द्धयेत् भिक्षुर्वानप्रस्थ-

वत्सोमपट्टिवर्ज्जं स्वशास्त्रसंस्कारश्चेति । एवं च सति धर्मप्रयोजनं विना वृथातद्भूतस्यातद्भावे प्रायश्चित्ताभाववचनमिति विवेक्तव्यम् ।

## बहिस्तूभयथापि स्मृतेराचाराच्च ।

आश्रमभ्रष्टाः कृतप्रायश्चित्ता अकृतप्रायश्चित्ता वा उभयथापि शिष्टैर्व्यवहारेषु बहिःकार्य्या एव कुतः स्मृतेः ।

आरूढपतितं विप्रं मण्डलाच्च बहिष्कृतम् ।

उद्बद्धं कृमिदष्टं च स्पृष्ट्वा चान्द्रायणं चरेदिति ॥

तथा आचाराच्च विवाहयज्ञादिषु तेषामव्यवहार्य्यत्वे शिष्टाचाराच्चेत्यर्थः । इदानीमिदं विचार्य्यते किं ब्रह्मविद्यास्वयमेव कर्त्तव्येति नियमः उत धनादिना ऋत्विग्द्वारापीति ।

## स्वामिनः फलश्रुतेरित्यात्रेयः ।

स्वामिनो यजमानस्यैव विद्यायां कर्तृत्वं कुतः तस्यैव फलश्रुतेः य एवं वेदेति फलश्रुतेः फलसामानाधिकरण्यस्यैवावगमादित्यर्थः । अयं च विचारो ऽदृष्टद्वारा फलोत्पत्तौ बोध्यः । अविद्यानिवृत्तिद्वारा मोक्षजनने च संशय एव नास्ति तत्वज्ञानमिथ्याज्ञाननिवर्त्योः सामानाधिकरण्येनैव हेतुमद्भावस्य लोकसिद्धत्वादिति । आधुनिकास्तु कर्माङ्गविद्याविषयमेव-

मधिकरणं न तु ब्रह्मविद्याविषयमिति तन्न । अ-
षु यथाश्रमभाव इति पूर्वपाद एवास्यार्थस्य मी-
ांसितत्वात् ।

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ।

ऋत्विजो ऽपि कर्म ब्रह्मविद्या भवतीत्यौडुलोमि-
राचार्यो मन्यते हि यस्मात्तस्मै फलाय ऋत्विक्कर्त्तृ-
कविज्ञानं यजमानेन परिक्रीयते धनादिभिरिति
अतो न फलवैय्यधिकरण्यं विद्यायाः धनेन विद्यायाः
क्रीतत्वादित्यर्थः ।

## श्रुतेश्च ।

विद्याया ऋत्विग्निष्ठाया यजमानफलदातृत्व
श्रवणाच्च । एवं विदुद्गाता आत्मने वा यजमानाय वा
यं कामं कामयते तमागायतीत्यादौ तत्र च ब्रह्मवि-
द्यात्वं वा ऽन्यविद्यात्वं वा न प्रयोजकमित्यर्थः । इदा-
नीमिदं विचार्य्यते.किं चतुर्थाश्रम एव ब्रह्मविद्याधि-
कारी ऽथ वा गृहस्थादिष्वपीति तत्र एतमेव प्रव्रा-
जिनो लोकमिति श्रुतेः । प्रव्राजिनामेवाधिकारः तत्र
च संन्यासाश्रमे कथं ऋत्विक् संभवेदिति पूर्वपक्षे
सिद्धान्तमाह ।

**सहकार्य्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ।**

काण्वे षष्ठेऽध्याये श्रूयते "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन एतमेव विदित्वा मुनिर्भवति एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीति तत्र तृतीयवाक्यं तद्वतो विद्यावतो विद्यायाः सहकार्यन्तरस्य प्रव्रज्याश्रमस्य विधिः सपक्षेणैव पाक्षिक एव यस्मिन् हि पक्षे गार्हस्थ्यादौ विक्षेपप्राबल्येन ब्रह्मकार्यं न सम्भवति तस्मिन् पक्षे व्यासङ्गनिवृत्तिद्वारोपकारिणी प्रव्रज्या ज्ञानाङ्गतया विधीयते न नियमेनेत्यर्थः । नियमे सति वक्ष्यमाणस्य गृहस्थत्वेनोपसंहारस्यानुपपत्तेः ।

न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।
श्राद्धकृत्सत्यवादी च गृहस्थोऽपीह मुच्यते ॥
तत्त्वज्ञानेन मुच्यन्ते यत्र तत्राश्रमे रताः ।

इत्यादिस्मृतिविरोधाच्च तस्मात्पारिव्रज्याश्रमो ज्ञाननिष्ठायां मुख्यकल्प एव गृहस्थोऽपीत्यपिशब्दस्य स्वरसाच्च । पाक्षिकत्वे दृष्टान्तमाह विध्यादिवदिति यथा गोदोहनेन पशुकामस्येति विधिः पशुकामभावत्वाभावाभ्यां पाक्षिकस्तद्वदित्यर्थः । ननु पाक्षिकविद्याङ्गत्वे सन्न्यासस्य कथं केवलगृहस्थाश्रमेणैव छान्दोग्ये विद्याया उपसंहारो

यथा छान्दोग्योपनिषत्समाप्तौ अभिसमाहृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधादात्मनि सर्वेन्द्रियाणि प्रतिष्ठाप्याहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्त्तते इति तामिमामाशङ्कां परिहरति।

## कृत्स्नभावात्तु गृहिणोपसंहारः।

कृत्स्नस्यैव चातुराश्रम्यधर्मस्य प्रायशो गृहस्थाश्रमे भावात् सत्त्वादेव केवलगृहिणोपसंहारः कृतः सर्वाश्रमोपलक्षणतया न तु आश्रमान्तराधिकारप्रतिषेधार्थमित्यर्थः। नन्वेवमपि गृहस्थसन्न्यासिनोरपि विद्यायामधिकारो लभ्यते इतराश्रमाधिकारे किं प्रमाणमित्याशङ्क्याह।

## मौनवदितरेषामप्युपदेशात्।

मौनवत्सन्न्यासाश्रमस्येव इतरेषामप्याश्रमाणां विद्यासंबन्धोऽस्ति कुत उपदेशात्।

ब्रह्मणामेवमुच्यन्ते यत्र तत्राश्रमे रताः।

इत्यादिवाक्येभ्य इत्यर्थः। विद्याया अङ्गान्तरमाह।

## अनाविष्कुर्वन्नन्वयात्।

आत्मनः सिद्ध्यादिकं योगाभ्यासं चानाविष्कुर्वन्

लौकिकेभ्योऽप्रकाशयन् योगी तिष्ठेत कुतो बन्धभयात् बन्धकसङ्गात् सिद्ध्यादिप्रकाशने हि समाधिविघ्नस्य लोकानुगमनस्य प्रसङ्ग इत्यर्थः । तथा च स्मृतिः ।

गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत् ।
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ॥
जना यथावमन्येरन् (*) गच्छेयुर्नैव सङ्गतिम्) ।

इति चाविष्कारस्यादिना प्रतिबन्धे तु भरतादिवदैहिको विद्यापरिपाक इत्याह ।

## ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ।

प्रस्तुतं बलवतो बलवत् प्रतिबन्धाभाव एवैहिकं तत् पर्यवसायिविज्ञानं भवति कुतो दर्शनात् भरतादीनां हरिणादिसङ्गप्रतिबन्धेनैहिकज्ञाननिष्ठाभावदर्शनादित्यर्थः । प्रतिबन्धाश्च व्याध्यादयश्चित्तविक्षेपकाः पातञ्जलिसूत्राभ्यां परिगणिताः ।

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ।

एवं च ज्ञानाभ्यासेन क्रियमाणेऽप्यैहिकस्य मुक्तिफलस्य नियमो नास्ति कुतः तदवस्थावधृतेः यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ॥ अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इत्यादिश्रुतिः प

(*) [illegible] पतितानि ।

[वैरा]ग्यस्यैव मोक्षहेतुज्ञानावस्थात्वावधारणात् तथा
[मोक्ष]हेतुज्ञानावस्थायाः स्मृतिष्वप्यवधृतत्वात् ।

योगयुक् प्रथमं योगी युञ्जमानो ऽभिधीयते ।
विनिष्पन्नसमाधिस्तु परब्रह्मोपलब्धिमान् ॥
यद्यन्तरायदोषेण दूष्यते नास्य मानसम् ।
जन्मान्तरैरभ्यसतो मुक्तिः पूर्वस्य जायते ॥
विनिष्पन्नसमाधिस्तु मुक्तिस्तत्रैव जन्मनि ।
प्राप्नोति योगी योगाग्निदग्धकर्म च यो ऽचिरात् ॥

इत्यादिवाक्यैरित्यर्थः । समाधिनिष्पत्तिश्च संप्रज्ञाता-
वस्थैकेन जन्मना न भवतीति नियमो ऽस्ति अत उत्प-
न्नज्ञानेनापि वक्ष्यमाणादसकृदावृत्तिप्रायणान्ता वि-
द्यायाः कर्त्तव्येतिसूत्रस्यास्य तात्पर्यार्थः । नचैवमैहिक-
[फल]त्वावश्यंभावे कस्यापि विश्वासो न स्यादिति वाच्यं
। असंप्रज्ञातसमाधिनैकमुक्तिनिर्णयसंभवात् । किं
[च] फलावश्यं भावनिश्चयो ज्ञानोत्पत्त्यैव जायते तत्रैहि-
[क]त्वनिर्णयाभावे ऽपि न क्षतिः अत एवैहिकत्वनि-
[र्ण]याभावेनामरणादसकृदावृत्तिः कर्तव्या मोक्षविल-
[म्बे]न सर्वैरेवेति तदवस्थावधृतेरिति द्विः पाठो ऽध्या-
[य]परिसमाप्त्यर्थः ॥

इति ब्रह्ममीमांसायां विज्ञानयतिकृते वि-
ज्ञानामृताख्यऋजुभाष्ये तृतीयाध्यायस्य
चतुर्थः पादः ।

श्री: इदानीं चतुर्थाध्यायेन विद्यानिष्पत्तेरत्यन्ता-
न्तरङ्गं साधनमभ्यासं विद्याया आकारं च संक्षेपेणो-
क्त्वा इति विस्तरेण विद्याफलं मोक्षद्वयमैहिकक्रमसु-
क्तिरूपं विचारणीयं तत्राद्यपादे ऐहिकमुक्तिविशेषतो
विचार्यते विद्यापादे त्वसामान्यत एव विद्या तत्फलं
चोक्तमिति न पौनरुक्त्यम् ।

## आवृत्तिरसकृदुपदेशात् ।

यत: पूर्वपादशेषे ऐहिकमप्रस्तुतप्रतिबन्धकमि-
त्युक्तमतो विद्याया असकृदावृत्ति: कर्त्तव्या ऽसंप्रज्ञात-
समाधिपर्यन्तं यथा विघ्नेन नाभिभूयते तत्र प्रमा-
णमाह उपदेशादिति तद्विष्णोर्विदं सदा पश्यन्ति सू-
रय: एतत् ज्ञेयं नित्यमेवात्मसंस्थं नात: परं वेदि-
तव्यं हि किं चित् तमेवैकं जानथ आत्मानं तमेव
धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण: ॥ योगी युञ्जीत
सततमात्मानं रहसि स्थित 'इत्यादिश्रुतिस्मृतिभ्य:
सतताभ्यासोपदेशादित्यर्थ: । आवृत्तेश्च विघ्नोत्सारक-
पातञ्जले सूचितं तत्प्रतिषेधार्थमेकतत्त्वाभ्यासमेकत-
त्त्वाभ्यास इति तत्प्रतिषेधो व्याध्याद्यन्तरायनिवृत्ति
मार्कण्डेयपुराणे चोक्तं पातित: श्रवणे दैवो [illegible]
त्तौ योगी तस्मान्मनोमयं चिन्तयेत्परमं ब्रह्म ज्ञात्वा [illegible]
त्प्रवणं मन इत्यादिना ।

## लिङ्गाच्च ।

लिङ्गादपि योगरूपात्मत्वयावृत्तिरेवापरा [illegible]

ध्याने यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह बुद्धिश्च नविचेष्टभित्तामाहुः परमां गतिं तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणां यवेदाङ्मनसी प्राज्ञ इत्यादिरूपादित्यर्थः । न ह्यभ्यासं विना चित्तवृत्तिनिरोधरूपो योगः सम्भवति अभ्यासवैराग्याभ्यां तन्निरोध इति योगसूत्रादिति भावः । एवं चावृत्तिरदृष्टजनिका स्वविषयसाक्षात्कारजनिका च भवति ।

मनसश्चेन्द्रियाणां चैकाग्र्यं परमं तपः ।
श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ॥
मत्वा च सततं ध्येय एते दर्शनहेतवः ।

इतिस्मृतेः यत्तु शब्दादेव साक्षात्कारो भवति आवृत्तिस्तु विपरीतभावनामात्रं निवर्त्तयतीति मतं तदस्माभिर्पञ्चमूच्या निराकृतं इदानीं ब्रह्मविद्याया अविद्यानिवर्तकं मुख्यमाकारमवधारयति ।

# आत्मेति तूपगच्छन्ति ग्राहयन्ति च

यद्ब्रह्म सत्यसंकल्पादिगुणकं परतः स्वतश्च निर्विशेषचिन्मात्रं नेति नेतीति निःशेषशेषप्रकृतिपुरुषाद्यखिलप्रपञ्चलयावधिभूतं तदेतदात्मेत्यहमित्युपगच्छन्ति अनुभवन्ति तात्त्विकाः तथैव शिष्यान् मुमुक्षून् ग्राहयन्ति च अन्यथा तटस्थब्रह्मज्ञानात् साक्षादविद्यानिवृत्त्यसम्भवादित्यर्थः । तथा च श्रुतिः तदात्मानमेव वेदहं ब्रह्मास्मीति स आत्मा तत्त्वमसीत्या

दिरिति। ननु जीवब्रह्मणोर्भेद उक्त इति कथं जीवस्य ब्रह्माहमिति ज्ञानं तत्वज्ञानं भवेदिति चेदुच्यते। य-था सांख्यमते अन्तःकरणाद्भिन्नो ऽपि जीवस्तस्यात्म-तया तस्याहमिति प्रमाविषयो भवति तथैव जीवा-दिदेहान्तेभ्यो भिन्नमपि ब्रह्म जीवादीनामात्मतयान्-तःकरणस्यात्त्वमिति प्रमाविषयः स्यात् अन्तर्यामि-तया जीवादिलयाधारतया च ब्रह्मैव सर्वेषां पारमा-र्थिकात्मेत्युक्तत्वात्। यथा च जीवात्मताज्ञानाद्देहा-द्यभिमानरूपाविद्यानिवृत्तिर्भवति तथैव च ब्रह्मात्म-ताज्ञानाज्जीवादिष्वभिमानस्य निवृत्तिः स्यात्। नन्वेवं किं जीवो ऽपि बुद्ध्यादिवदनात्मैव तथा च सांख्या-दिसर्वशास्त्रविरोध इति चेन्न। सृष्टिकाले च न, च-भोक्तृत्वादिना व्यावहारिक्या जीवात्मतायाः सर्वशा-स्त्रे ऽभ्युपगमात्। सृष्टिकाले स्वकारित्वेन प्रपञ्चस्य व्यावहारिकसत्तावत् ब्रह्मापेक्षया तत्तस्याप्यनात्मत्वं भारतकूर्मपुराणादिषु दृश्यत एव यथा मोक्षधर्मे

अन्यश्च राजन् पुरवस्तथान्यः पञ्चविंशकः।
तत्स्थत्वाच्चानुपश्यन्ति एक एवेति साधवः।
ते चैनं नाभिनन्दन्ति पञ्चविंशकमच्युत।
षड्विंशमनुपश्यन्तः शुचयस्तत्परायणाः॥
इति नाभिनन्दति आत्मत्वेनेत्यन्तं कौर्मे च
तत्वैः संपादितं सूक्ष्मं पुरुषः पञ्चविंशकः।
जैवरिच्छावंशात्मो ऽपि जडात्मा कथ्यते

इति प्रलयादौ चैतन्यफलोपधानाभावात् सर्गकाले चैतन्यफलोपधानस्य चेश्वरेच्छाधीनत्वाद्बुद्ध्यादिवदेव जीवस्य जडत्वमतो न मुख्यमात्मत्वमित्यर्थः।
एतदपि स्मर्यते।

आत्मन्यवस्थिते ऽव्यक्ते विकारे चोपसंहृते।
साधर्म्येणावतिष्ठेते प्रधानपुरुषावुभौ॥
यथा दारुमयी योषा यथा यन्त्रमयो मृगः।
तथा सर्वाणि भूतानि ईशतन्त्राणि विद्धि भो॥

इति तथा च श्रुतिरपि तमेवैकं जानथ आत्मानं नान्यो ऽतो द्रष्टा यथा वृक्षो वनस्पतिस्तथैव पुरुषो नित्यो नित्यानां चेतनश्चेतनानामित्यादिः चित्स्वरूपत्वे ऽपि जीवानां स्वोपाधिसंबन्धाधीनचैतन्यफलोपधानस्य कादाचित्कत्वेन वाचारम्भणमात्रत्वात् प्रकृतितद्विकारवदेव जीवानां मृषात्वं न त्वन्यन्तासत्त्वमादरादलोप इति सूत्रात् तस्मात् प्रलयमोक्षादौ तदुपयसंबन्धाभावात् काष्ठलोष्ठादिवज्जडाः सन्तो जीवा मध्यंदिनादित्यवत् सदा सर्वावभासके परमात्मनि विलीयन्ते समुद्रे नदनद्य इव पुनश्च स एव परमात्मा स्वेच्छयाग्निविस्फुलिङ्गवत्तानुपायिसंबन्धेन जीवो विभज्यान्तर्यामी स न प्रेरयति तथा चोक्तं सूत्रतान्त्वा इव नीयमाना इति अतः स एव मुख्य आत्मान्तर्याम्यमृत इत्यादिश्रुतेरिति सिद्धम्। नन्वेवं जीवानामात्मत्वाभावात कथं मुक्तिरस्तीति चेत्। देहाद्यभिमान

स्य संसारहेतोर्निवर्त्तकत्वादिति। ये त्वाधुनिका जी-
वब्रह्मणोरखण्डत्वस्य सूत्रस्यार्थं वर्णयन्ति तन्मतं प्र-
त्यसूच्या विस्तरेण निराकृतं। किं चोभयथानुभवसंभवे
ऽपि भेदग्राहकश्रुतिस्मृतिपूर्वोक्तसूत्रजातन्यायाद्यवि-
रोधेनैवास्य सूत्रस्य तात्पर्यं सूचितं न तद्विरोधेनाख-
ण्डतापरत्वम् अस्य सूत्रस्य विद्याकारमात्रनिर्णायक-
त्वात् स्वातन्त्र्येणाखण्डतापरत्वस्यापि कल्पने वा-
क्यभेदप्रसङ्गाच्च। स म आत्मेति विद्यादित्यादिश्रु-
त्यनुसारश्चास्मत्कृतसूत्रव्याख्यान एव दृश्यते तथा
स्मृत्यनुसारेऽपि यथा कौर्मे।

प्रधानं पुरुषश्चैव तत्त्वद्वयमुदाहृतम्।
तयोरनादिर्निर्दिष्टः कालसंयोजकः परः॥
त्रयमेतदनाद्यं तु अव्यक्ते समवस्थितं।
तदात्मकं तदन्यस्यात्तद्रूपं मामकं विदुः॥

इति अत्र हि पुरुषादित्रयस्याव्यक्ताख्यब्रह्मात्म-
कत्वब्रह्माभेदश्चोक्त इति। नन्वेवमेकस्मिन्नेव संघाते
विदुषां कथमात्मद्वयप्रत्ययो घटते तत्राह।

## न प्रतीकेन हि सः।

प्रतीकमङ्गमंश इति पर्यायाः ब्रह्मणो [illegible]
मित्युपगच्छन्ति न प्रतीकेऽंशे जीवे तथा दे[illegible]
ग्रववदंशे प्रकृतितत्कार्ये च कुतः न हि यस्मात्[illegible]
जीवादौ न सः पारमार्थिकात्तात्त्विक आत्मेत्यर्थः।[illegible]

कथं तर्हि स एव मायापरिमोहितात्मेत्यादिश्रुतिर्जीवादेर्ब्रह्मत्वं प्रतिपादयतीत्याशङ्कायामाह।

## ब्रह्मदृष्टिरुत्कर्षात्।

प्रतीके च जीवादौ ब्रह्मदृष्टिरुपासनाहार्यज्ञानरूपैव मन्तव्या किरणादौ सूर्यादिदृष्टिवत् न पुनस्तत्त्वज्ञानेस्येत्यर्थः। उत्कर्षादिति उत्कर्षार्थमित्यर्थः। ब्रह्मदृष्ट्या हि जीवानामसंसारित्वादिरूप उत्कर्षो भवतीति। अत्र च हेतुः पूर्वमेवोक्त उपदेशान्तरवदित्यनेन "मनोब्रह्मेत्युपासीत""आदित्यो ब्रह्मेत्यादेशः""सर्वं खल्विदं ब्रह्म"त्यादिप्रतीकोपासनाद्यविभागगुणेनाहार्यरूपैव वाच्या जडस्य ब्रह्मत्वानुपपत्तेरतस्तदृष्टान्तेन तत्सह पठितजीवप्रतीकेऽप्याहार्यदृष्टिरेवानुमीयत इति तत्त्वज्ञानप्रकरणेषु च जीवादिषु ब्रह्मभेदबोधकश्रुतिस्तु तयोऽविभागलक्षणाभेदमात्रं शरीरशरीरिणोरिवाङ्गाङ्गिमात्रार्थताबोधनायेति विशेषः। व्यतिहारवाक्यं चात्यन्तसाम्यपरमेवेति प्रतिपादितव्यतिहारो विशिंषन्ति हीतरदित्यत्र। ननु यथा ब्रह्मवा इदमग्र आसीत् तदात्मानमेव वेदाहं ब्रह्मास्मीत्यादिश्रवणादहं ब्रह्मास्मीत्याद्युपासनास्ति तथा अथ योऽन्यां देवतामुपास्तेऽन्यो सावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानामित्यादिनिन्दाश्रवणात् सूर्य्य आत्मा जगतस्तस्थुषश्चेत्यादिश्रुतेश्चादित्योऽहं चण्डोऽहं व-

कथो ऽहमित्यादिकमपि विज्ञानमभ्युपगन्तव्यं तत्रापि किं सूर्यादिब्रह्मवदेवात्मतया द्रष्टव्यो जीवो वादित्यादितया ऽथ वास्ति प्रकारभेद इत्याकाङ्क्षायामाह ।

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ।

चक्षुराङ्गे चक्षुरादावेवादित्यादिदृष्टिर्बोध्या न त्वादित्यादिष ब्रह्मवदात्मतया न वा जीव आदित्यादितया दृष्टिः कुतः उपपत्ते र्यतः आदित्यादयो देवाः स्वस्वांशेषु चक्षुर्यत्वादित्याधिष्ठातृभावः सन्नाते तिष्ठन्ति अतस्तत्तदङ्गद्वारैवाहमादित्यो ऽहं चन्द्र इत्याद्युपासनाद्युक्तेत्यर्थः । तथा चैवमेव मनुनापि दृष्टिरुक्ता आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितमित्युपक्रमात् खं सन्निवेशयेत् खेषु चेष्टनस्पर्शने ऽनिलं । पक्तिदृष्ट्योःपरन्तेजःस्नेहयोगं च मूर्तिष्वित्यादिनेति अन्तात्मा सन्नात इत्यर्थः । ब्रह्मणस्तु साक्षादेव प्रकृतिपुरुषाधिष्ठातृत्वेन तयोरात्मतया ब्रह्मणि दृष्टपुरुषे ब्रह्मदृष्टिः पूर्वसूत्रद्वये.क्ता युक्तैवेति भावः । अत्र उपपत्तेरिति हेतुतयोपन्यासादाह ब्रह्मेत्यादिवाक्याद्युपपत्त्यैव निर्णयो न त्वाधुनिकानामयौक्तिकसर्वशास्त्रविरुद्धरीत्येधिगम्यते इदानीमावृत्तिरूपयोगस्य सहाभावाक्रमा

## आसीनः संभवात् ।

आसीनः पद्मासनायुक्तः सन्नावृत्तिरूपमेकाग्रं कुर्यात्कुतः संभवात् गमनादौ चित्तविक्षेपादुत्थितस

देहधारणायासेन चित्तचाञ्चल्यात् शयानस्य च नि-
द्रागमात् पद्मासनादिनैव तादृशबहुदोषपरीहारसं-
भवादित्यर्थः। ऐकाग्र्यलक्षणसमाधेरङ्गान्तरमाह।

## ध्यानाच्च।

संभवादिति हेतुरुत्तरसूत्रे चाप्यनुवर्तते चशब्दः
समुच्चये ध्यानेनापि साधनेनावृत्तिरूपः समाधिः सं-
पादनीयः ध्यानमुत्तरसूत्रे वक्ष्यामः। ध्यानस्यापि
साधनमाह।

## अचलत्वं चापेक्ष्य।

चित्तस्याचलत्वं धारणां चापेक्ष्य ध्यानं संपाद-
नीयमित्यर्थः। धारणाध्यानयोश्च लक्षणं पातञ्जले क्र-
मेणोक्तं देशबन्धश्चित्तस्य धारणा तत्र प्रत्ययैकतान-
ता ध्यानमिति इदं च सूत्रद्वयं व्यासदेवैर्व्याख्यातं देशे
नाभिचक्रादौ चित्तस्य बन्धः स्थापनं धारणा तस्मिन्ने-
व च देशेऽन्तर्याम्यादिरूपध्येयालम्बनस्य चित्तस्यैकता-
नताप्रत्ययप्रवाहः प्रत्ययान्तरेणापरामृष्टो ध्यानम्।
आवृत्तिरसकृदुपदेशादित्यनेनोक्ता चावृत्तिरेतयोः फ-
लसमाधिः तस्यापि लक्षणं योगसूत्रेणोक्तं तदेवार्थमा-
त्रनिर्भासं स्वरूपशून्यमिव समाधिरित्यनेन एतच्च
व्यासदेवैर्व्याख्यातं ध्यानमेव ध्येयाकारमात्रनिर्भास
प्रत्ययात्मकेन स्वरूपेण रूपेण शून्यमिव यदा भवति
ध्येयस्वभावावेशात्तदा समाधिरित्युच्यत इति प्रत्य-

यात्मकत्वं यदा न भासते तदा ध्यानमेव समाधिर्भवतीत्यर्थः। यमनियमप्राणायामप्रत्याहाराश्च शमदमादिमध्ये पातिता इत्यतः पृथक् सूत्रेण नोक्ता इत्यष्टाङ्गयोगसंग्रहः समाधिफलं तु साक्षात्कारनिष्ठा सा च तदधिगमउत्तरपूर्वाघयोरित्यादिसूत्रेण वक्ष्यते इति विभागो द्रष्टव्यः संभवादित्यपेक्षया हेत्वन्तरमाह।

## स्मरन्ति च।

स्मरन्ति च वशिष्ठादयः आसनादीनि ज्ञानाङ्गतया।

यमश्च नियमश्चैव तथा चासनमिष्यते।
प्राणायामस्तथा शक्तेः प्रत्याहारश्च धारणा॥
ध्यानं समाधिरेतानि योगाङ्गानि तपोधन।
आदौ चत्वारि वाह्यानि तदन्यान्यन्तराणि च॥
अष्टात्मकमिदं विद्धि पवित्रं पापनाशनं।
ज्ञानं गुह्यतमं प्रोक्तं कीर्तितं ते तपोधन॥

इत्यादिनेत्यर्थः। ज्ञायते ऽनेनेति ज्ञानं तथा योगसूत्रमपि योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा विवेकख्यातेरिति योगाङ्गं देशमपि विचारयति।

## यत्रैकाग्रता तत्राविशेषात्।

यत्र स्थाने गृहे वा वने वा गिरिगुहादौ वा एकाग्रता सम्भवति तत्रैव योगाभ्यासः कर्त्तव्यो ऽविशे-

स्यात् । नात्रारण्यगिरिगुहादिविशेषनियमो मन्तव्यः अरण्यगिरिगुहादीनां अपिकाभिप्रायेणैव शास्त्रेषूक्तत्वात् विविक्तदेशे हि व्यासङ्गादिदोषाः प्रायशो न भवन्तीति । न पुनर्योऽत्युत्तमसाधकसापेक्षो यो वा गृह एव जनकादिवत् समाधियोग्यो भवति तेनाप्यरण्यं गन्तव्यमिति नियमो ऽस्तीत्यर्थः । तथा च मार्कण्डेयदत्तात्रेयवाक्यं ।

तत्रैवात्रपथे स्थित्वा यत्र वा स्थैर्यमात्मनः ।
युञ्जीत योगी निर्ज्जीत्य त्रीन् गुणान् परमात्मनि ॥

इति त्रीन् गुणान्सुखदुःखमोहान् ननु कियत्कालमभ्यासः कर्त्तव्य इत्यपेक्षायामाह ।

## आप्रायणात्तत्रापि हि दृष्टम् ।

आदेहत्यागादेवैवंप्रत्ययावृत्तिः कर्त्तव्या कृतसाक्षात्कारेणाकृतसाक्षात्कारेण वा कुतः तथा हि दृष्टं जडभरतादिष्विति यद्वा दृष्टं श्रुतं स यो ह वै भगवान् मनुष्येषु प्रायणान्तमोंकारमभिध्यायीतेत्यादिनेत्यर्थः तत्र कृतसाक्षात्कारस्याप्यावृत्तिरसंप्रज्ञातसमाध्यर्थमिति प्रागेव प्रतिपादितं प्रतिपादयाते चेति तत्रापि दृष्टमिति पाठे तु तत्राप्रायणमपि श्रुतिरस्तीत्यर्थः । अथेदानीं ब्रह्मविद्यायाः सद्योमुक्तिरूपं फलमार्गोऽपि च विचार्यते ।

## तदधिगम उत्तरपूर्वाघयोरश्लेष-विनाशौ तद्व्यपदेशात् ।

तदेवं यथोक्तसाधनैस्तदधिगमे ब्रह्मात्मत्वसाक्षात्कारे सति उत्तरस्याघस्याश्लेषो ऽनुत्पत्तिः पूर्वस्य चोत्पन्नस्य विनाशो भवति अघशब्दो ऽत्र रम्यकत्वगुणेन कर्ममात्रोपलक्षकं कर्म चात्र विहितनिषिद्धाचरणं न तु अदृष्टरूपमतो नोत्तराघस्याप्रसिद्धिः अश्लेषविनाशौ चादृष्टाख्यव्यापारद्वारकाविति उक्तप्रतिज्ञायां प्रमाणमाह तद्व्यपदेशादिति यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेव विदिपापं कर्म न श्लिष्यते ।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ।

इत्यादिस्मृत्या च ज्ञानस्य पापपुण्यानुत्पत्तिविनाशहेतुत्वव्यपदेशादिभ्यः । अत्रोत्तराघस्य प्रमादाशक्तिसमाध्यादिनिमित्तस्यैवाश्लेषो विवक्षितः । ननु त्यागकर्मत्यागवृथाविकर्मणोः ।

* यस्तु विद्याभिमानेन वेदमार्गप्रवर्तनम् ।
कुलजात्यादिभिर्जह्यात् स महापातकी भवेत् ॥

इत्यादिभिः स्कान्दादिवाक्यैर्वृथा स्वातन्त्र्ये विदु-

षामपि प्रत्यवायसिद्धेः। अन्यथा जनकादीनां कर्मानुष्ठानवैयर्थ्यापत्तेश्च । न च लोकसंग्रहार्थमेव तेषां कर्म स्यादिति वाच्यम । लोकानां कर्मसंग्रहेणास्य स्वतोऽपुरुषार्थत्वेन तत्रापि प्रत्यवायानुत्पादस्यैव फलत्वात् उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहमित्यादिवाक्यैर्लोकसंग्रहकर्मणः उपकरणे लोकहिंसाया प्रत्यवायसिद्धेश्चेति पूर्वकर्मविनाशश्चात्र तदाह एवं क्लेशाख्यसहकार्य्युच्छेदरूपः सति मूले तद्विपाको जात्यायुर्भोगा इतियोगसूत्रेण क्लेशे सत्येव प्रारब्धातिरिक्तकर्मणां विपाकहेतुत्वसिद्ध्या ऽविद्योच्छेदादेव कर्मविपाकासंभवात् ज्ञानस्य पूर्वकर्मनाशकत्वकल्पनावैयर्थ्यात् अत एव भस्मसात्करणमेव स्मर्यत इति कर्मनाशे सति किं स्यात्तत्राह ।

## इतरस्याप्येवमसंश्लेषः पाते तु ।

एवं कर्मक्षयेण देहपाते तु सतीतरस्यापि सुखदुःखाद्यशेषगुणस्यासंश्रयो विदेहकैवल्यमिहैव भवतीत्यर्थः । कर्मसत्तौ हि पुनर्वेदारम्भः सुखदुःखादिकं च ततश्च कर्मण्यशेषत उन्मूलिते पुनरौपाधिको ऽपि संसारः स्यादिति अत एव यद्यप्यविद्यापि ब्रह्मात्मज्ञानान्निवर्तते तथापि पूर्वसूत्रे ऽविद्यानिवृत्तिं विहाय कर्मनिवृत्तिरेव ज्ञानानुक्ता कर्मनिवृत्तेरेव साक्षान्मोक्षहेतुत्वादिति बोध्यम् । अस्माच्च सूत्रादन-

र्थनिवृत्तिरेव परममुक्तिर्न स्वानन्दावाप्तिरित्यवधारणीयम्। आनन्दावाप्तेरवचनात् अवक्ष्यमाणत्वाच्च अत एव श्रुतिरपि वक्ष्यति शोकमात्मवित् अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशत इत्यादि एतदपि पञ्चसूत्र्यां विशेषतो विचारितमस्माभिरिति। ननु पाते त्विति कथमुच्यते ज्ञानोत्तरं पूर्वकर्मदाहे तत्क्षण एव मुक्त्यौचित्यादित्याशङ्कायामाह।

## अनारब्धकार्ये एव तु पूर्वे तदवधेः।

पूर्वे पुण्यपापे विनश्यत इत्युक्तन्ते अनारब्धकार्ये एवेति मन्तव्यं कुतः तदवधेः तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति कर्मविमोचनस्य मोक्षावधित्वश्रवणादित्यर्थः। यदि हि ज्ञानेन तत्क्षणादेव मुक्तिः स्यात् तदा तस्य विषयस्तावदेव चिरमिति वचनं न युज्यत इतिभावः। तस्मात्कर्मपातपर्यन्तं प्रारब्धकर्मणा प्रतिबन्धादुत्पन्नज्ञानस्य मोक्षे विलयादुपदेशादिकमप्युपपन्नमिति बोध्यम्। ननु ज्ञानेनाविद्यानिवृत्तौ कथं देहधारणं कथं चोपदेशादिः स्यादिति चेन्न। अभिमानस्य देहधारणाद्यहेतुत्वात्। देहसम्बन्धस्य कर्मजन्यत्वात्। अभिमानाभावेऽपि स्वस्वत्वादौ')देहधारणात् प्रवृत्तिनिवृत्त्योरिष्टसाधनताज्ञानादिजन्यत्वात्। स्वभोग्यसुखसाधनताज्ञानं स्वभोग्यदुःखाभावसाधनताज्ञानं च प्रवृत्ति-

कारणमित्युक्तत्वात्। पञ्चसूत्र्यामिति अविद्यादिक्लेशानां च विपाकप्रारम्भ एव कर्मसहकारित्वं योगे प्रोक्तं। यत्त्वाधुनिकाः अविद्यायाः सर्वव्यवहारकारणत्वं परिकल्प्य तदुपपत्त्यर्थं जीवन्मुक्तस्याप्यविद्यालेशस्तिष्ठतीति वर्णयन्ति अविद्याख्यकारणगतस्य विशेषस्य दुर्वचत्वात्। विस्तरतस्तु ते पञ्चसूत्र्यामेव निराकृता इति। यत्तु अनेकदेहहेतोः प्रारब्धकर्मणोऽपि न फलमसमाप्यपेक्षा यावन्न विमोक्ष्य इति श्रुत्या वर्तमानदेहपातानन्तरमेव मोक्षावगमादिति तत्र प्रारब्धकर्मणो मोचनस्यैव तच्छ्रुत्यर्थत्वात् सूत्रेऽनारब्धकार्ये इत्येव सामान्यतो वचनात् तन्मते तेनैव त्वंशेन धर्माधर्मयोरुत्पत्त्या संसारानुच्छेदप्रसङ्गात् विशेषणप्रक्षेपे तु योगभाष्योक्तं कार्यकोटिप्रारम्भविशेषणमेवोचितं ज्ञानिनां जन्माद्यभाववाक्यानि च प्रारब्धसमाप्त्युत्तरमिति विशेषणीयान्येव अन्यथा ज्ञानिनां कायव्यूहादिषु जन्ममरणाद्युपपत्तेः। एतेन देहारम्भककर्मणो प्रारब्धत्वे भोगेनैव क्षय इति सिद्धिः। ननु यदि तदधिगमादेव कर्मक्षयो देहपातानन्तरं च कारणाभावात् स्वयमेवात्यन्तिको विशेषगुणोच्छेदस्तर्ह्यग्निहोत्रादिना विद्यायाः क उपकारः क्रियेत यत तस्य पूर्वोक्तं सहकार्यङ्गत्वं सम्भवेदित्याशङ्क्याह।

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्।**

तस्य ज्ञानस्य यत्कार्यं कर्मक्षयादिस्तदर्थकमेवा-ग्निहोत्रादिकं मन्तव्यं कुतः तद्दर्शनात् श्रवणादित्यर्थः अन्यथा नित्याकरणजप्रत्यवायेन प्रतिबन्धात् कर्मक्ष-यादिरूपाशेषोच्छेदे विलम्बसम्भवादिति भावः । ननु तस्य प्रतिबन्धकत्वे किं प्रमाणमिति चेन्न । ज्ञानिना-मपि कर्मकर्त्तव्यताश्रवणे प्रतिबन्धानुमानादिति । स्व-तन्त्रास्तु तत्कार्यायैव तस्यैव ज्ञानरूपाय कार्यायैवेति व्याचक्षते । तन्न तथा सति तस्मा इत्येवारभ्यं युक्त-त्वादिति मन्तान्तरं संवादमत्र प्रमाणयति ।

## अतो ऽन्यापि ह्येकेषामुभयोः ।

अतस्तद्दर्शनादेव हि एतेषां मते केवलविद्यापे-क्षया ऽन्यापि कर्मसमुच्चितापि विद्या मोक्षसाधनं अन्येत्युक्तं विद्यणोति उभयोरिति कर्मणोर्मुक्तिरिति शेषः । दर्शनमेवाह ।

## यदेव विद्ययेति हि ।

"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य-वत्तरं भवतीति" समुच्चय ऽधिकास्तुतिश्च श्रम इत्यर्थः । ननु यदेव विद्ययेत्यादिस्तुत्या विद्यायाः कर्माङ्गत्व-मेव लभ्यते न समुच्चय इति चेत् सत्यं तथाऽप्य-व्यस्थाया विद्याकर्मणोरन्योन्यं शेषशेषीभावश्रवणेन सहकारित्वमेव वाक्यानां ज्ञातपर्थेन त्वङ्गाङ्गिभाव ए-त्वन्येषामाशय इति भावः । भूमिकाभेदेन च तैः

महाफलोक्तं विरोधो नास्तीति प्रागेवोक्तम् । इदानीं-प्रारब्धफलककर्मणो भोगमात्रैकनाश्यत्वमाह ।

## भोगेन त्वितरे क्षपयित्वा संपद्यते ।

अनारब्धकार्ययोः पुण्यपापयोर्विद्यया नाश इत्युक्तम् । इतरेत्वारब्धफलके पुण्यपापे भोगेन क्षपयित्वा निरस्य ब्रह्म संपद्यते समुद्रे नदीवदित्यर्थः । अन्यथा तावदेव चिरं यावन्न विमोक्ष्ये ऽथ संपत्स्य इति विलम्बरचनानुपपत्तिरुपदेष्टृत्वाग्रमम्भवादित्यर्थश्चेति भावः । अत एव स्मृतिर्ज्ञानिप्रकरणस्था उपभोगेन पुण्यानामपि क्षये इति ।

इति ब्रह्ममीमांसायां विज्ञानयतिकृते विज्ञानामृताख्यऋजुभाष्ये चतुर्थाध्यायस्य प्रथमः पादः ।

पूर्वपादे यथोक्तसाधनैर्निर्गुणब्रह्मविद्यापरिपाकवत ऐहिकी परममुक्तिर्विचारिता । इदानीं सगुणब्रह्मविदुषोपकृततत्वज्ञानस्य च क्रममुक्तिर्विचारणीया पादत्रयेण तत्रायं विभागः । द्वितीयपादेन सम्पत्त्युत्क्रान्ती विचारयिष्यति तृतीयेन चार्चिरादिक्रमेण ब्रह्मलोकगतिं चतुर्थेन वैश्वर्यं भोगानन्तरं तत्रैव मुक्तिमिति तत्रादौ यथोक्तविद्वदविद्वत्साधारणी मरणकालीना ब्रह्मसम्पत्तिर्ब्रह्मलोकगतिप्रसङ्गेनैव निचार्यते ।

# वाङ्मनसि दर्शनाच्छब्दाच्च ।

अत्र पूर्वपादशेषसूत्रात् सम्पद्यत इत्यनुवर्त्तते अथान्तकाले वाक् वागिन्द्रियं मनसि स्ववृत्तिरहितं संपद्यते दुग्धे जलवदविभक्तं लक्षणानन्यत्वं प्राप्नोति वक्तुमिच्छत्येव न तु वक्तुं शक्नोतीति यावत् कुतः दर्शनाच्च दृश्यते हि मरणकाले हस्तादिव्यापारानुमितवृत्तिके मनसि वक्तुमिच्छतोऽपि वागिन्द्रियस्तम्भः तथा शब्दाच्च अस्य सौम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामितीत्यर्थः । ननु सूत्रे विशेषवचनात् कथं सगुणादिविद्यापरत्वमत्रावगम्यत इति चेत् अस्तत्वं चानुपोष्येति वक्ष्यमाणसूत्रादित्यवेहि इयं च संपत्तिः कारणलयरूपो विनाशो न भवति वक्ष्यन्ति तु संपरिष्वक्त इत्यत्र लिङ्गशरीरस्य लोकान्तरगमनवचनात् एवमनभ्युपगन्तृवैशेषिकादिनिरासार्थकत्वाद्वा । सर्वकरणनाशे वक्ष्यमाणगमनानुपपत्तेश्च ।तथायन आदिनां गगनाद्यकारणत्वेन तेषु तद्विलयासंभवाच्च । किं त्वविभागेन मोदकादिवदेकपिण्डतामात्रम् अविभागो वचनादिति वक्ष्यमाणसूत्रादिति बोध्यम् । एवमेव संपत्तिरुत्तरसूत्रेष्वपि बोध्या । यद्यपि श्रुतावेव वाचो मनसि लयोऽसंदिग्धस्तथाप्यमूत्रस्यानुवादमात्रस्योत्तरसूत्रे प्रयोजनसत्वान्न वैयर्थ्यम् । एवमनभ्युपगन्तृवैशेषिकादिनिरासार्थकत्वाद्वा ।

## अत एव सर्वाण्यनु ।

यत एव श्रुतिप्रत्यक्षाभ्यां वागिन्द्रियमनस्यवि-भा. रूपा संपत्तिः सिद्धा अत एव दृष्टान्तादपराणि च त्वगादीनि श्रुत्यनुक्तान्यपि सर्वाणीन्द्रियाणि वाचोऽनुपश्चान्मनसि संपद्यन्त इत्यनुमीयत इत्यर्थः । तथा च त्वगादिलये दर्शनशब्दयोरभावे ऽपि न क्षतिरिति भावः । इयं च स्वप्नादिदृष्टान्तेनाप्यनुमेये स्वप्नमनोरथादौ हि रागादिवृत्तयो वचनस्पर्शश्रवणादीनि मनस्येव भवन्ति नेन्द्रियकाणीति ।

## तन्मनः प्राण उत्तरात् ।

तद्विना न सर्वेन्द्रियकं मनः प्राणे वृत्तिमति संपद्यते गन्ध इव वायौ कुतः उत्तरान्मनः प्राण इत्युत्तरवाक्यादित्यर्थः । इदं च स्वस्वदृष्टान्तेनानुमेयं स्वस्वप्ने हि मनोवृत्तिरपि न तिष्ठति केवलप्राणवृत्तिदर्शनात् । प्राण एव मनसो वृत्तिनिरोधस्तु प्राणवृत्त्येवाध्यानादनुमीयत इति ।

## सोऽध्यक्षे तदुपगमादिभ्यः ।

स प्राणस्तदध्यक्षे तत्स्वामिनि प्राणिनि जीवे संपद्यते प्राणनापानादिरूपवृत्तिरहितः संतिष्ठति कुतः तदुपगमादिभ्यः । एवमेवैतमात्मानमन्तकाले सर्वे प्रा-

णा अभिसमायान्ति तमुत्क्रामन्तं प्राणो ऽनुत्क्रामति प्राणमनुत्क्रामन्तं सर्वे प्राणा अनुत्क्रामन्तीति प्राणस्य जीवोपगमनानुगमनादिश्रुतेरित्यर्थः । यद्यपि जीवस्यापि वृत्तिस्तदा नास्ति सविज्ञानो भवति सविज्ञानमेवानुत्क्रामतीति श्रुतिस्तु स्वरूपचैतन्याप्रत्ययपरत्वेनोपपद्यते तथापि तादात्म्येन तत एवाविर्भावाज्जीवे प्राणलय उच्यते जीवस्योत्क्रमणं च बुद्ध्यौपाधिकमिति । नन्वेवं प्राणस्तेजसीत्युदाहृतवाक्यविरोधः । न । जीवद्वारा प्राणस्य तेजसि लये ऽपि तद्वाक्योपपत्तेरिति ।

## भूतेष्वतः श्रुतेः ।

अतः परं स प्राणसंयुक्तो ऽध्यक्षो बुद्धिसंभिन्नः पञ्चभूतेषु सूक्ष्मेषु संपद्यते क्रियादिरूपा भूतवृत्तिरेव तिष्ठति न त्वन्येषां वृत्तिरिति कुतः श्रुतेः । विज्ञानघन एवैभ्योभूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीति श्रुतेरित्यर्थः । जीवस्य सोपकरणस्य भूतेषु लयश्रुत्याद्यात्मकभूतेभ्यो ऽभिव्यक्त्या ऽऽनुमीयते । एतेन प्राणस्तेजसीति वाक्यं जीवद्वारत्वेनैवोपपादनीयं । ननु प्राणस्तेजसीतिवाक्याज्जीवद्वारेणापि प्राणस्य लयः केवलतेजस्येव युक्तः । ननु पञ्चभूतेष्विति बहुवचनस्य व्यक्त्यभिप्रायेणाप्युपपत्तेरित्याशङ्कां परिहरति ।

# नैकस्मिन्दर्शयतो हि ।

। शरीरत्यागकाले जीवो नैकस्मिन्नेव तेजस्यवतिष्ठते हि यस्मात्श्रुतिस्मृती तथा दर्शयति यथा श्रुतिः तद्यथा पेशस्कारी पेशसो मात्रामपादायान्यनवतरं कल्याणतरं रूपं तनुत एवमेवायमात्मेदं शरीरं देहादन्यद्रूपं कुरुत इत्यनन्तरं सवा अयमात्मा पृथिवीमय आपोमयस्तेजोवायुमय आकाशमय इत्यादिः स्मृतिश्च ।

अण्व्यो मात्राविनाशिन्यो दशार्द्धानां च याःस्मृताः ।
ताभिः सार्द्धमिदं सर्वं संभवत्यनुपूर्वशः ॥

इत्यादिरित्यर्थः पेशस्कारी स्वर्णकारः आपादाय विछिद्य । ननु श्रुत्यन्तरे कामं तदा पुरुषो भवतीति प्रश्ने तौ ह यदूचतुरित्युत्तरेण मरणकाले जीवस्य कर्माश्रयतावचनात् कथं भूताश्रयपरत्वं स्यादिति चेन्न । तत्र कर्माश्रयतावचनेन कर्मतन्त्रतामात्रस्याभिप्रेतत्वात् । अविभागसंबन्धेन द्रव्यस्य गुणाश्रितत्वासंभवात् । उभयाश्रितत्वेनाश्रयविरोधाच्चेति । ननु अस्य सौम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यत इत्यादिवाक्यं तद्यथा पेशस्कारीत्यादिवाक्यं च विद्याफलपरं न भवति तैःकथं विदुषो मरणप्रक्रियावधार्यत इत्याशङ्कायामाह ।

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ।

आसृत्युपक्रमात् आलोकान्तरगमनारम्भादिह-त्यविदुषो मरणकालीना संपत्तिः समानैव भवति कुतः अमृतत्वं चानुपोष्य चो हेतौ इदममृतत्वम् अनुपोष्य विवेकज्ञानाल्लिङ्गशरीरमदग्ध्वैव जायते अतो लिङ्गश-रीरसत्वादविदुष इव विदुषोऽपि यथोक्तसंपत्तियु-क्ता । प्रक्रियाभेदकल्पने गौरवात् । क्रममुक्तौ प्रक्रिया-न्तराश्रवणाच्चेत्यर्थः । अर्चिरादिसंपत्तिव्यावर्तनाय आ-सृत्युपक्रमादित्युक्तं । नन्विदं सूत्रं तानि परे तथेत्या-हेत्यागामिसूत्रानन्तरमेवोचितं तेनैव सूत्रेण साधार-णसंपत्तिविचारसमाप्तेरिति चेन्न । परेऽव्यये सर्व ए-कीभवन्तीत्यादिफलश्रवणेन परसंपत्तौ समानत्वसंश-याभावात् । इदानीं वक्ष्यमाणगमनोपपत्त्यर्थं यथोक्त-लिङ्गशरीरस्य भूतपर्यन्तस्य मरणकाले विनाशो ना-स्तीति प्रतिपादयति ।

## तदापीतेः संसारव्यपदेशात् ।

तद्भूतपञ्चकं करणप्राणजीवाश्रयभूतं सूक्ष्मदे-हाख्यम् आप्यपीतेः प्राकृतप्रलयपर्यन्तम् जीवन्मुक्तानां तिष्ठति न तु स्थूलदेहेन सह नश्यति कुतः संसारव्य-पदेशात् स्वर्गकाले जीवस्य पुनःपुनर्गमनागमनरूप-संसरणव्यपदेशाच्छ्रुतिस्मृत्योरित्यर्थः । न हि विनोर्ध्वं-

स्य स्वतो गमनादियुक्तं नापि निराश्रयस्य कारणावादेर्गतागतौ संभवत इति सूक्ष्मत्वेन रागद्व्यवदाश्रयवियोगे नाशप्रसङ्गादिति । तथा च योक्तं सांख्ये गतिश्रुतीरप्युपाधियोगादाकाशवदिति ।

चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा छाया
तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥

इति च विशेषैर्भूतैरित्यर्थः ।

सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः ।
सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते ॥

इति तद्वाक्यादिति सांख्यवदेवाचार्योऽपि लिङ्गशरीराश्रयभूतं भूतपञ्चकं सूक्ष्ममेवाह ।

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ।

तच्च कारणाश्रयभूतपञ्चकं सूक्ष्मं कुतः । प्रमाणतस्तथोपलब्धेः । यदि हि स्थूलं स्यात्सूक्ष्मनाडीभिर्निष्क्रमणं न स्यात् तस्माच्च योगिनां शिलाद्यन्तःप्रवेशश्रुत्यादिप्रमाणैः सूक्ष्मत्वसिद्धेरित्यर्थः । अत एव च गमनकाले पार्श्वस्थैर्न दृश्य इत्यप्युपपन्नं सूक्ष्मत्वावधारणस्य फलमाह ।

## नोपमर्दनातः ।

अत एव सूक्ष्मतः स्थूलशरीरस्योपमर्देन दाहादिना नोपपद्यत इति शेषः । लिङ्गशरीराश्रयसूक्ष्मदेहे प्रमाणान्तरमाह ।

## अस्यैव चोपपत्तेरेष ऊष्मा ।

अस्यैव च सूक्ष्मदेहस्य तेजःप्रधानस्योष्मा स्पर्शेन स्थूलशरीरेषूपलभ्यते न तु स्थूलशरीरस्य कुत उपपत्तेः । मृते शरीरे ऽनुपलम्भादित्यर्थः । तथा च श्रुतिः "ऊष्म एवैष जीविष्यन् शीतो मरिष्यन्निति" ।

## प्रतिषेधादिति चेन्न शारीरात् ।

ननु मोक्षपर्यन्तं लिङ्गशरीराधारभूतपञ्चकमेव पुनःपुनः संसरतीति न युक्तं । प्रतिषेधात् । अविद्विषो ऽपि काण्डे उत्क्रान्तिप्रतिषेधात् । यत्रायं पुरुषो म्रियते तदस्मात्प्राणाः क्रामन्त्याहो नेति नेति होवाच याज्ञवल्क्यो ऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्मातो मृतः शेत इति तस्मात् सामान्यतः सर्वपुरुषसाधारण्येनोत्क्रान्त्यभावान्न संसरणं सूक्ष्मदेहस्येति चेन्न । शारीराज्जीवादेवायं प्राणानामुत्क्रान्तिप्रतिषेधो न शारीरात् । अस्मादित्यत्र अत्रैव समवनीयन्त इत्य[त्रा]त्मा प्रकृतपुरुषस्यैव परामर्शादित्यर्थः । तथा च मरणकाले जीवस्य प्राणवियोगो नास्तीति तच्छ्रुत्यर्थः । तस्मादविद्विषः करणवर्गस्य शरीरादुत्क्रान्तिरस्त्येवेति प्राणस्य देहादनुत्क्रमणो बाधकमप्याह ।

## स्पष्टो ह्येकेषाम् ।

वाक्ति यथा चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणो ऽनुत्क्रामतीति स्पष्टं: ।

## स्मर्य्यते च ।

स्मर्यते च गीतादौ व्युत्क्रमो यथेन्द्रियाणि प्रकृत्य
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयादिति ॥
अङ्गुष्ठमात्रपुरुषं निश्चकर्ष बलाद्यमः ।

इत्यादि च । नन्वेवं परब्रह्मविदः परममुक्तावपि गतिश्रवणादुत्क्रान्तिःस्यात् यथा भारते शुकः किल वैयासकिर्मुमुक्षुरादित्यमण्डलमभिप्रतस्थे ततश्च पित्रानुगम्याहूतो भो इति प्रतिशुश्रावेति । न च तदप्यभ्युपगन्तुं शक्यते न तस्य प्राणा उत्क्रामन्तीत्यादिश्रुते तथा च यथा सा गतिश्रुतिर्गौणत्वादिनोपपादनीया तथैवाविशिष्टो ऽप्युत्क्रान्तिश्रुतिरुपपाद्यतामिति मैवं सशरीरस्यैव शुकस्य योगबलेन विशिष्टदेशप्राप्तौ तदनन्तरमेव देहोत्सर्गस्य तत्रावगमात् ।

शुकस्तु मारुताच्छीघ्रां गतिं कृत्वान्तरीक्षगः ।
दर्शयित्वा प्रभावं स्वं सर्वभूतगतो ऽभवत् ॥

इत्युत्तरवाक्यात् नापि तदानीं परमुक्तिसिद्धासर्वात्मभावस्य हिरण्यगर्भादिवल्लिङ्गशरीरे ऽप्युपपत्तेः । शुकस्य परब्रह्मवित्वे ऽपि तदानीं कर्मापेक्षया मायापरिपाकतो ज्ञानपरिणामभावादित्यव-

# अविभागो वचनात् ।

आकाशे वायोरिवाविलक्षणानन्यत्वमेव सम्पत्तिः न त्वेकत्वं भिन्नयोरखण्डताद्युपेक्षासम्भवात् नापि विनाशो गतिश्रवणात् अत्र प्रमाणमाह वचनादिति तेजः परस्यां देवतायामित्यस्याव्यवधानेनाविभागस्यैव मधुसमुद्रादिदृष्टान्ते श्रुत्या स्वयं वचनात् यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समवहारमेकतां रसं गमयन्ति ते यथा तत्र विवेकं न लभन्ते ऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीति एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति सम्पद्यामह इति त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तत्तदाभवन्ति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो विद्यादिभिरित्यर्थः । अत्र हि वाक्यभेदेन सतामेव सोपकरणजीवानां पृथग्वृत्तितालक्षणमविभागं स्वस्मिन् स्ववणमात्रं दृष्टान्तानुसारेण प्रतीयते ते यथा तत्र विवेकं न लभन्त इति च स्फुटमेव विवेकमात्ररूपमैक्यं प्रतियत इति । नन्वेवं तत्त्वमसीति वचनमपि स्वस्मिन् श्रवणपरमेव स्यादिति कथं ब्रह्मण आत्मत्वसिद्धिरिति चेन्न । ऐतदात्म्यमिदं सर्वमित्यनेनैव स्वस्मिन् श्रवणस्य प्राप्ततया तत्त्वमित्यस्य ब्रह्मात्मतापरत्वावगमात् स आत्मेत्यनेन च साक्षितालक्षणमात्मत्वमुक्तं तत्त्वमसी-

अनेन तु सर्वोध्यसंघाताद्यन्यत्वमित्यपौनरुक्त्यं किं च अविद्यानिवर्तकब्रह्मात्मताप्रतिपत्त्यर्थमेवाविभागरूपसंपत्त्यादि बोध्यते अन्यथा तत्र ज्ञानप्रकरणे संपत्त्यादिप्रतिपादने फलासम्भवात् ब्रह्मात्मताया एवाभ्यर्हिततया सर्ववेदान्तेष्वौत्सर्गिकार्थत्वाच्च । तत्त्वमसिवाक्यस्याविभागार्थकत्वेऽपि एष त आत्मा स स आत्मेति विद्यादित्यादिश्रुत्या ब्रह्मणि सर्ववस्तूनामात्मत्वं सेत्स्यत्येवेति एतेन तत्त्वमसिवाक्यस्याखण्डतापरत्वं न भवतीत्यवधारितं भवति श्रौतदृष्टान्तानुसाराद्विभागलक्षणैकात्म्यस्यैव तत्त्वमसिवाक्यार्थोपपादकत्वावगमादिति । अत एव वशिष्ठेनापि मोक्षावस्थायां भिन्नयोर्जीवब्रह्मणोरविभागरूपमात्मैक्यमुक्तं सा मुक्तिर्ब्रह्मणा चैक्यमनैक्यं प्राकृतैर्गुणैरित्यनेन अत्र प्राकृतैर्गुणैर्यादृशमैक्यं मोक्षकाले जीवस्य निवर्तते ब्रह्मणा सहापि तादृशमात्मैक्यं तदा भवतीति गम्यते तच्चाविभाग इति अतस्तदेकवाक्यतया सर्वलक्षणैक्यस्याविभागरूपतावधारणीया तस्माज्जीवब्रह्मणोऽविभागरूप एवाविभागः सूत्रात् सिद्धम् । एतच्च पञ्चसूत्र्यां प्रपञ्चितमिति दिक् । आधुनिकास्तु तानि परे तथा ह्याह अविभागो वचनादिति सूत्राद्या अब्रह्मविद आत्यन्तिकीं सम्पत्तिं परममुक्त्याख्यामाचार्यः प्रतिपादयतीत्याहुः तन्न क्रममुक्तिप्रकरणमध्ये मुख्यस्य परममुक्तिपरत्वकल्पनौचित्यात् । तेजः परस्यां देवतायामिति विषयवाक्ये सति सम्पद्य न विद्-

इति सम्पद्यामह इतीत्यादिवाक्येन च मरणास्वस्थोरेव) ब्रह्मसम्पत्तिरुक्ततया सूत्रस्यापि प्रकरणानुसारेण तत्परत्वस्य वौचित्याच्च । परमसुक्तावप्यविभागस्त्विष्यत एव स आत्यन्तिक इत्येव विशेष इति यदपि तैरुक्तम् अविभागशब्दो ऽत्र औपाधिकभेदनिवृत्तिवाचीति तदपि न लक्षणापत्तेः। पूर्वाचार्यविरोधाच्च । तथा रागादीनां मनआदिषु तदानीमप्यन्योन्याभावमत्त्वाच्चेति विद्वदविद्वत्साधारणी सम्पत्तिर्विचारिता अथेदानीं विद्वदुत्क्रान्तिर्विचार्यते ।

## तदोको ऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ।

तदेवं हृदयच्छेदेन ब्रह्मण्यविभागापन्नो विद्वान् तेनैव हार्देन हृदयस्थेन ब्रह्मणा सदुपासितेनानुगृहीतो ब्रह्मलोकप्रायणेच्छाज्ञतिभ्यां विषयीकृतः सन् मूर्धन्यया शताधिकया ब्रह्मनाड्या रश्म्यनुसारी भवतीत्युत्तरेणान्वयः । यद्यप्यविदुषामपीश्वराधिष्ठानादेव निष्क्रमणं तथापि तच्चानुग्रहो वास्तीत्यन्यद्वारैर्णैव निष्क्रमणमित्यनुग्रहशब्देन प्रतिपादितम् । अस्मिंश्चार्थे विद्याख्या श्रुतिः प्रमाणं शतं चैका च हृदयस्य

माद्यन्तासां मूर्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृ-
तत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्तीति ईश्वरानु-
ग्रहस्य कारणमाह विद्यासामर्थ्यादिति। ननूपासना-
सामर्थ्याच्चेदीश्वरोऽनुग्राहकस्तर्हि विदेहकैवल्यमेव
कथं न ददा इत्यत आह तच्छेषगत्यनुस्मृतियोगाच्चेति।
विद्याशेषभूता तदङ्गभूता या गत्यनुस्मृतिर्गत्यनुचि-
न्तनं तत्प्रार्थनमिति यावत्। ब्रह्मलोकमभिसम्भ-
वामीत्यादिश्रुत्युक्तं तद्योगात् संबन्धात् ब्रह्मलो-
ककामनया ब्रह्मलोकगतिमेव ददाति न सद्यो
मुक्तिमित्यर्थः समर्थोऽयमीश्वरो ये यथा मां प्रप-
द्यन्ते तांस्तथैव भजाम्यहमित्यादिश्रवणान्निर्गुणका-
मनया निर्गुणोपासनाकार्यं सद्योमुक्तिं ददातीत्या-
शयः। ईश्वरस्यानुग्रहप्रकारमाह तदोकोग्रज्वलनं त-
त्प्रकाशितद्वार इति तस्य ब्रह्मण ओकः स्थानं हृ-
दयं तस्य हृदयस्याग्रे भौतिकं ज्वलनमाधावापस्थप्र-
दीपवत्तिष्ठति तेन ज्वलनेनेश्वरविदारितनाडीद्वारो
विद्वानित्यर्थः। यद्यपि सर्वेषामेव हृदयाग्रज्वलनेन
द्वारविदारणान्निष्क्रमणं भवति तस्य हैतस्य हृद-
यस्याग्रं प्रद्योतते तेनैष आत्मा निष्क्रामति चक्षुषो
वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्य इत्यविशेष-
श्रुतेः। तथापीश्वराधिष्ठितज्वलनमूर्ध्वमेव विदुषां ग-
च्छतीति विशेषः।

रश्म्यनुसारी।

ब्रह्मरन्ध्रेण निष्क्रामति विद्वान् ब्रह्मनाडीसुषुम्ना-दित्यरश्मीनामनुसारी भवतीत्यर्थः । तदनुगतस्तैर-श्मिभिःस्वयं सुषुम्ना मार्गेण प्राणानसञ्चार्य ब्रह्मरन्ध्रं भित्त्वा गमनं तु प्रकारान्तरमेव तद्विनैवात्र विद्यये-ताहृशगतिरुच्यत इति विशेषः । निष्क्रामानामपि स-गुणनिर्गुणविद्यायामपनिबद्धायामेव गतिर्दृष्ट्यनुसा-रतः कल्प्यत इति ताभिरेकीभूय पृथिव्यादिरसव-द्देहान्निष्क्रामतीति भावः । तथा हि हार्दविद्यायां श्रुतिः "अथ या एता हृदयस्य नाड्य" इत्यादिना स-प्रपञ्चं नाडीभिरादित्यरश्मिसम्बन्धमाह "अथ य-त्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्द्ध्वमाक्रमते ओमितिवाहोद्वामीयते स यावत् क्षिप्येन्मनस्तावदा-दित्यं गच्छत्येतद्वै लोकं द्वारं विदुषामित्यादि त-स्माद्रश्मिद्वारोत्क्रामतीति सिद्धम् ।

## निशि नेति चेन्न सम्बन्धस्य या-वद्देहभावित्वात् दर्शयति च ।

ननु दिवसे सूर्यरश्मिभिर्देहसम्बन्धान्न तदनुग-त्या जीवस्य निष्क्रमणं स्यान्न तु निशीति चेन्न । ना-डीभिः सूर्यरश्मिसम्बन्धस्य यावद्देहभावित्वात् । रा-त्रावपि निदाघादिना देहे सूर्यरश्म्यनुगमात् । आ-दित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इत्यादिकर्मणः सौरतेजसां देहारम्भकत्वाच्च । तथा श्रुतिरप्येतमर्थं

दर्शयति अमुष्मादादित्यात् प्रतायन्ते ता आसु नाडी-षु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते ते अमुष्मिन्ना-दित्ये सृप्ता इति दहरविद्यास्थवाक्येनेत्यर्थः। ता मरी-चयः न च रात्रौ मृतस्य गत्यर्थं दिनप्रतीक्षैव कथं नोच्यत इति वाच्यम। स यावत् क्षिप्येन्मनस्तावदा-दित्यं गच्छेदित्यनेनाविलम्बावगमादिति। तस्माद्दि-वैव विदुषो निष्क्रान्तिर्भवतीति न नियमः।

## अतश्चायने ऽपि दक्षिणे।

अतो दिवानियमाभावात्तत्सहपठितस्योत्तराय-णस्यापि न नियम इति दक्षिणायने ऽपि विदुष उत्-क्रान्तिर्भवतीत्यर्थः। प्रसूर्यरश्मीनामेव गमनद्वारत्वात्ते-षां च सार्वकालिकत्वादिति। ननु यदि रात्रिदक्षिणा-यनयोर्ब्रह्मनाड्योराक्रमणं ब्रह्मविदामस्ति तर्हि।

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ॥

इत्यनन्तरं दिवसरात्र्युत्तरायणदक्षिणायनादिवि-भागेनानावृत्त्या वृत्तिविभागः स्मृतो विरुध्येतेति तत्राह।

## योगिनः प्रति च स्मर्यते स्मार्ते चैते।

केवलयोगाभ्यासिनः स्वच्छन्दमृत्यवो ऽत्र योगि-नः न तु ब्रह्मविदः आतयोगिनः प्रत्येव कीसादी

कालविशेषः स्मर्यते योगस्य प्राणाभ्यास एवाधिक्येन सिद्धेः तदुक्तं वाशिष्ठे।

असाध्यः कस्यचिद्योगः कस्य चिज्ज्ञाननिश्चयः।
द्वौ प्रकारौ ततो देवो जगाद परमः शिवः॥

प्रकारौ द्वावपि प्रोक्तौ योगशब्देन यद्यपि।
रूढिमायातः प्राणयुक्तावसौदृशमिति। ननु रात्र्यादिशब्दैस्तदभिमानिदेवता एव गृह्यन्त इति वक्ष्यति तत्कथं स्मृतावपि रात्र्यादिकाले मरणासिद्धिस्तत्राह स्मार्ते चैते इति एते च रात्रिदक्षिणायने कालौ स्मृतावुक्तौ न त्वभिमानिदेवते इति यत्रो हि तत्कालं वक्ष्यामि भरतर्षभेत्यादिवाक्येभ्यो दिवसोत्तरायणादीनां कालरूपत्वमवगम्यते श्रुतौ च कालवाचकशब्दाभावात्। अर्चिषोऽहरह्न आपूर्य माणपक्षमित्यादिपञ्चमीभिः क्रमावगमाच्च। न कालपरता मरणकाले दिनयज्ञादौ क्रमासम्भवात्। किं तु नेतृदेवतापरत्वमेव तदेतत् आतिवाहिकस्तल्लिङ्गादित्यत्राचार्य एव वक्ष्यति स्मृत्युक्तानां चाग्निज्योतिर्धूमानां कालोपाधितया कालत्वमुपपादनीयं भीष्मस्य च ब्रह्मविद्यासत्वेऽपि योगगत्यर्थं कालप्रतीक्षणं युक्तं भूयसि भूय इतिन्यायेन साधनप्राचुर्ये फलाधिक्यसिद्धेरिति।

इति ब्रह्ममीमांसायां विज्ञानयतिकृते विज्ञानामृताख्यऋजुभाष्ये चतुर्थाध्यायस्य द्वितीयः पादः।

इदानीमीश्वराधिष्ठानाद्ब्रह्मनाड्योत्क्रान्तस्य देवयानपथा ब्रह्मलोकगतिस्तृतीयपादेन विचारणीया।

## अर्च्चिरादिना तत्प्रथितेः।

देवयानवर्त्मनि न्यूनाधिकपर्वभेदेनापाततो विरुद्धायमानानि बहूनि श्रुतिवाक्यानि सन्ति तत्राचार्यौऽधिकपर्वप्रतिपादकश्रुतीः सङ्गमयन्मार्गपर्वणां ग्रथनमारभते सर्वोऽपि ब्रह्मलोकप्रेप्सुरर्च्चिरादिनैव मार्गेण रश्मीननुसरतीत्यन्वयः। कुतस्तत्प्रथितेः ते ऽर्चिषमभिसम्भवन्तीति श्रुतिप्रसिद्धेरित्यर्थः। तथा च स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकमिति कौषीतकिश्रुतावग्निलोकशब्दो ऽर्च्चिलोकपर्य्यायइतिभावः। मार्गस्याद्यपरिबोधं परिहृत्य मार्गमध्यस्थानां पर्वणां क्रमविरोधं परिहरति।

## वायुमब्दादविशेषविशेषाभ्याम्।

यद्यपि ऽते ऽर्चिषमभिसम्भवन्ति अर्चिषो ऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं सम्वत्सरादादित्यमिति वाक्ये संवत्सरादब्दादनन्तरमेवादित्यं गच्छतीति श्रूयते तथापि यदा वै पुरुषो ऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खण्डं तेन स ऊर्ध्वमाक्रमते सआदित्यमागच्छतीति श्रु

ह्यन्तरे वायुप्रत्तेन चक्रवात्या छिद्रेणादित्यलोके गमनदर्शनात् अब्दादनन्तरं वायुं गच्छतीति प्रत्येतव्यं कुतः अविशेषविशेषाभ्यां सामान्यविशेषाभ्यामित्यर्थः विरोधभञ्जनार्थं सम्वत्सरादादित्यमिति सामान्यवाक्यस्य वाय्वनन्तरादित्यगमनबोधकेन विशेषवाक्येन सहैव वाक्याद्वौचित्यादिति। यच्च मासेभ्यो देवलोकादादित्यमिति श्रुत्यन्तरं तत्रापि सामान्याविशेषाभ्यां देवलोकशब्दो वायुलोकवचनः प्राप्तेभ्य इति चाब्दद्वारेतिबोध्यमिति भावः।

## तडितो ऽधिवरुणः सम्बन्धात्।

यच्च कौषीतयुक्तो वरुणलोके स तु आदित्याच्चन्द्रमसं चन्द्रमसोविद्युतमिति श्रुत्यन्तरोक्तात्तडिल्लोकादधिउपरिप्रत्येतव्यः। कुतः सम्बन्धात् जलाधिष्ठानात् वरुणस्य विद्युतश्च सन्निकर्षादित्यर्थः। तदेव सर्वश्रुतीनामेकधाक्यतया यं मार्गक्रमोपधारितः आदावग्निलोकापरनामकमर्च्चिः तचा ऽहः ततः शुक्लपक्षः तत उत्तरायणं ततो वत्सरः ततो लोकापरनामा वायुलोकः तत आदित्यः ततश्चन्द्रः ततो विद्युत् ततो वरुणः तत [illegible] ततः प्रजापतिः ततो ब्रह्मलोक इति एवं मार्गव्यवस्था कृता तत्रायं संशयः किमेतान्यर्च्चिरादीनि वर्त्मम[illegible] सोपानवत् किं वा विदुषां भोगभूमयः आहोस्वित् गन्तॄणां नेतारो देवरूपा इति तत्र सिद्धान्तमाह।

## आतिवाहिकास्तल्लिङ्गात् ।

अतिवहन्त्युपासकानित्यातिवाहिकास्चेतना एव देवा अर्चिरादिशब्देनोक्ताः कुतस्तल्लिङ्गात् । अग्ने नय सुपथा राये अस्मान् विश्वानि देव युनानि विद्वानिति प्रार्थनारूपलिङ्गात् तथा चन्द्रमसो विद्युतं तत्पुरुषो ऽमानवः स एतान् ब्रह्म गमयतीत्यनेन सह पाठाल्लिङ्गादपीत्यर्थः । ननु सर्वमार्गपर्वस्वातिवाहिककल्पनायां गौरवमित्याशङ्कायामाह ।

## उभयव्यामोहात्तत्सिद्धेः ।

गन्तुरुपासकस्य देवयानपितृयानयोरुभयोः पथोर्व्यामोहादिमिथ्यापरिचायकानां सर्वत्रातिवाहिकानां देवानां सिद्धेरित्यर्थः । लोकशब्दस्य स्थानेष्विव तद्वासिजनेऽप्युपपद्यत एव तत्र लोकगमनं तत्तल्लोकेषु भोगस्वाध्यायेन निराक्रियते श्रुतिस्मृतिभ्यस्तयोरप्यवगमात् । ननु भोगार्थं विलम्बे स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छेदिति श्रुतिविरोध इति चेन्न वर्त्मनि भोगमनिच्छोरुपासकस्य क्षिप्रगमनसम्भवादिति । ननु यदि मार्गदेवावुभावप्युपासकेन गन्तव्यौ तर्हि किमित्यग्निलोकादिशब्देषु च देवतावाचित्वमाश्रीयतइति चेन्न । उपासनार्थं देवतानामेव श्रुतिभिर्वचनौचित्यात् । ब्रह्मलोकजिगमिषोर्वर्त्मलोकप्र-

तिपादने चोत्कटप्रयोजनाभावादिति । विद्युदनन्तरं वातिवाहिकेषु विशेषमाह ।

## वैद्युतेनैव ततस्तच्छ्रुतेः ।

विद्युल्लोकीयेनामरपुरुषेण सहैव ततस्तदुत्तरातिवाहिका वरुणादयो देवा नेतारो न तु केवला एव वरुणादय कुतः । उक्तश्रुत्या विद्युल्लोकस्थपुरुषस्य ब्रह्मपर्यन्तनेतृत्वश्रवणादित्यर्थः ।

## कार्यं बादरिरस्य गत्युपपत्तेः ।

तु वैद्युतमं मानवं पुरुषं प्रकृत्य स एनान् ब्रह्म गमयतीति गत्यन्ते श्रूयते तत्र संशयः । किं कार्यं हिरण्यगर्भाख्यमपरं ब्रह्म गमयति । उत परं कारणं मुख्यं ब्रह्मेति । तत्रादौ स्वमतमाह । कार्यमपरं ब्रह्म गमयतीत्याचार्य्यबादरिर्मन्यते । कुतः अस्य गत्युपपत्तेः कार्यब्रह्मण एव गन्तव्यत्वोपपत्तेरित्यर्थः । कारणब्रह्मणः सर्वत्रैकतया तत्प्राप्तये गमनानौचित्यात् । कार्यस्य हिरण्यगर्भस्य तु सूर्यवत् प्रादेशविशेष एवाधिकारं व्यापकत्वं तु किरणादित्वात् वा सूर्यस्येवेति तत्प्राप्तं गमनमुचितमिति । दृष्टं च सर्वदेहव्यापिनो ऽपि जीवस्य सूक्ष्मेष्वधिष्ठानातिरेक इति अथ वा अस्य वैद्युतपुरुषस्य कार्यब्रह्मलोक एव गमनसम्भवादित्यर्थः ।

## विशेषितत्वाच्च ।

प्रजापतेः सभां वेश्म प्रपद्ये इत्यनेन अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवीत्यादिना च ब्रह्मलोकस्य विशेषितत्वात् कार्यं ब्रह्मैव गन्तव्यं तथा ब्रह्मलोकान् गमयतीत्यादिना ब्रह्मलोकस्य बहुत्वेन विशेषितत्वादपि कार्यं ब्रह्मैव गन्तव्यब्रह्मविष्णुरुद्रीयादिरूपेण सत्यलोकस्यावान्तरतो नानात्वात्। न च ब्रह्माण इत्येत इति स्मरणाच्च परब्रह्मणो गन्तव्यत्वे तु सभादिकं भूर्लोकात्तृतीयत्वं बहुत्वं च नोपपद्यतेत्यर्थः। ननु कार्यपरत्वे ऽपि ब्रह्मशब्दो नोपपद्यते कार्यस्य परिच्छिन्नत्वेनाब्रह्मत्वात् जन्माद्यस्य यत इत्यनेन कार्यस्यैव ब्रह्मशब्दार्थतावधारणाच्चेत्याशङ्कायामाह।

## सामीप्यात्तु तद्व्यपदेशः।

परब्रह्मणः साक्षात्कार्यत्वेनात्यन्यूनशक्तित्वेनाविर्भूतब्रह्मात्मभावेन च ब्रह्मसामीप्यात्। कार्ये हिरण्यगर्भे ब्रह्मव्यपदेश इत्यर्थः। एतद्वै सत्यकामपरमपरं च ब्रह्म यदोंकारः आब्रह्मभुवना लोकाः ऽपुनरावर्त्तिनो ऽर्ज्जुनेत्यादिश्रुतिस्मृत्यर्थाः। कार्ये ऽपि ब्रह्मशब्दप्रयोगदर्शनादिति भावः। तर्हि नानार्थतैवास्त्विति चेन्न। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते।

यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकं।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति गीयते॥

इत्यादिश्रुतिस्मृतिभ्यां कारणो ऽव्यक्त एव ब्रह्म-शब्दस्य मुख्यत्वावधारणादिति । ननु मुख्यब्रह्मोपासकस्य तत्प्राप्त्यभावे सत्युपासनानुरूपफलबोधकश्रुत्यादिविरोध इत्याशङ्कायामाह ।

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ।

कार्यब्रह्मलोकप्रलयकाले तदध्यक्षेण हिरण्यगर्भेण सहातो ब्रह्मलोकात् परं कारणं ब्रह्म संपद्यते कुतः । अभिधानात् । ते ब्रह्मलोकेषु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे इत्यादिश्रुतिभिरित्यर्थः । ब्रह्मणः परं तस्यान्तकाले सति अपरस्य कार्यब्रह्मणो ऽमृतात्ते ब्रह्मलोकगास्तत्रैव परिपक्वज्ञाना मुच्यन्ते-मुच्यन्त इति श्रुत्यर्थः ।

## स्मृतेश्च ।

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

इत्यादिस्मृतेश्च कार्यब्रह्मणा सह लोकस्थानां ज्ञानिनां परब्रह्मप्राप्तिरित्यर्थः । अत एव कूर्मपुराणे शिववाक्यमपि ।

येषां हि वशमापन्ना माया मे पारमेश्वरी।
लभन्ते निर्मलं शुद्धं निर्गुणान्ते मया सह॥
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि।
प्रसादान्मम योगीन्द्रा एतद्वेदानुशासनम्॥

## परं जैमिनिर्मुख्यत्वात्।

जैमिनिस्त्वाचार्यः स एतान् ब्रह्म गमयतीति वाक्ये परं कारणमेव गमयतीति मन्यते कुतः मुख्यत्वात् परब्रह्मण्येव ब्रह्मशब्दस्य मुख्यत्वात् गौणमुख्ययोश्च मुख्ये संप्रत्यय इत्यर्थः।

## दर्शनाच्च।

तथा दर्शनात् "सत्यं ज्ञानमनन्तं ब्रह्म" "यो वेद निहितं गुहायां" "सो ऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते" तिश्रवणात्। किं च परमेव ब्रह्म उपासको दृष्टवान् अतो दर्शनानुरूपफलं युज्यते तं यथा यथोपासत इत्यादिवाक्येभ्यः अपि च तयोर्ध्वमायन्नमृतत्वमेतीति गतिपूर्वकममृतत्वं दृश्यते अमृतत्वं च परब्रह्मप्राप्तावेवोपपन्नः कार्यस्य क्षयित्वादित्यर्थः। न-न्वेवं प्रजापतेः सभां वेश्म प्रपद्य इत्याद्याभिर्न भिन्नेपि पद्यत इत्याशङ्क्याह।

## न च कार्ये प्रतिपत्त्यभिसंधिः।

प्रतिपत्त्यभिसन्धिः फलविषया प्राप्त्यभिप्रायः

स च कार्ये ब्रह्मलोके न मन्तव्यं किं तु कारणब्रह्म-ण्येव यस्तु प्रजापतेः सभां वेश्म प्रपद्य इत्यभिमानः। स तत्संविधयैवार्च्चिरादाभिमानादित्यर्थः। एतेन इतो-ऽस्यामितीदिरीत्यादिरप्यर्च्चिरादिलोकवत्तत्संविधयैवो-पपादनीय इति भावः। ऐश्वर्यविशेषं च कारणात्मस्था-प्युत्तरपादे उपपादयिष्यामः। तदिदं बादरिजैमि-न्योर्मतद्वयमुपासकभेदेन समञ्जसीकरोत्याचार्यः।

## अप्रतिकालम्बनान्नयतीति बादरायण उभयथा ऽदोषात् तत्क्रतुश्च

ये ब्रह्मविष्णुरुद्रान् चतुर्विंशतितत्त्वानि वा ब्र-ह्मदृष्ट्योपासते ते प्रतीकोपासकाः प्रतीकालम्बनाः प्रतिकशब्दस्याङ्गवाचित्वात्। ये तु ब्रह्म विशेष्यं कृत्वा तैर्विशेषणैरुपासते ये वा केवलब्रह्मविद्वांसः ते ऽप्रति-कालम्बनाः तयोर्मध्ये ऽप्रतिकालम्बनानेव विदुषो जै-मिन्युक्तं परं ब्रह्म नयति ब्रह्मलोकात्तत्रत्यदेवगणः अर्थात् प्रतीकालम्बनात् हिरण्यगर्भादिषु ब्रह्मोपा-सकान् नादयुक्तं कार्यब्रह्मलोके भोगार्थं प्रलयपर्यन्तं स्थापयतीति बादरायणो मतद्वयव्यवस्थायै मन्यते कुतः उभयथा ऽदोषात्। एवं सत्युभयप्रकारेणोभयम-ताविरोधादिति ; नन्वत्र किं प्रमाणं तत्राह तत् क्र-तुश्चेति तत् क्रतुरित्यनेनांशेऽशांशिनी श्रुतिगृहीता स यथा कामो भवति तत् क्रतुर्भवति तत् कर्म कुरुते

तदभिसंपद्यते तदेव शुक्रः सह कर्मणेति लिङ्गं मनो यत्र निषक्तमस्येति श्रुतिश्चास्तीत्यर्थः। अथ वा चोंऽप्तौ तत्क्रतुत्वादित्यर्थः। तथा च प्रतीकेषु ब्रह्मोपासकानां प्रतीकसाहित्येनैव फलमुचितं कारणब्रह्मविशिष्टव्यक्तोपासनादिमतां च तत्साहित्येनेतिभावः। ननु ब्रह्मलोकगतान् न परब्रह्म नयति देवगण इत्यत्र किं प्रमाणमिति चेत् मोक्षधर्म एव।

सत्वं वहति शुद्धात्मन् परं नारायणं प्रभुम्।
प्रभुर्वहति शुद्धात्मा परमात्मानमात्मनः॥
परमात्मानमासाद्य तद्भूमायतमानसाः।
अमृतत्वाय कल्पन्ते न निवर्तन्ति वै विभो॥

इति अत्र हि ततस्तान् स्वकृतीन् ज्ञात्वा सूर्यो वहति रश्मिभिरित्युपक्रम्य वर्त्मपरम्परया। देवानां नारायणपर्यन्तानामतिवाहिकत्वमेवोक्तम् अतो नात्र प्राकृतप्रलयकालीनो नारायणेन सह प्रवेशो विवक्षित इति। ननु परब्रह्मणो व्यापकत्वात्तत्प्राप्तये गतिविफलेत्युक्तं सत्युपपत्तेरित्यत्रेति चेन्न। आवरणेभ्यो बहिर्गत्वा प्रकृष्टभोग्यं सुञ्जानः कारणब्रह्मापुरेण हिरण्यगर्भादीन् प्रत्यपीप्सरवदेवेष्ट इत्यस्यैव फलत्वसंभवात्। शास्त्रावगतस्यार्थस्य स्वर्गादिवत् तर्काविषयत्वे ऽप्यक्ततेश्चेति। नन्वेवं परब्रह्मप्राप्त्यर्थमपि गत्यङ्गीकारे श्रुति न तस्य प्राणा उत्क्रामन्तीत्यादिविरोध इत्याशङ्क्याह।

विशेषं च दर्शयति।

सकामाकामभेदेनोत्क्रान्त्यनुत्क्रान्तिरूपं विशेषं च विदुषां दर्शयति श्रुतिर्यथा इति तु कामयमानाम् इत्यन्तेन ब्रह्मात्मां गति मुक्त्वाह अथाकामयमानां यो ऽकामो निष्काम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येतीति तथा यदा सर्वे प्रमुच्यन्ते कामा ये ऽस्य हृदि स्थिताः अथ मर्त्यो ऽमृतो भवत्यत्र ब्रह्म समश्नुत इति च निष्कामस्यैवैहिकामुष्मिमुक्तिमुक्त्वाह शतं चैका च हृदयस्य नाड्यस्तासामित्यादिना क्रममुक्तिमर्थात् सकामस्येति। नन्वेकस्मात् परब्रह्मोपासनात् कथं फलद्वैतमिति चेत् ज्ञानपरिपाकापरिपाकरूपविशेषादुपासनाभेदद्वये देहविवेकेनात्मतया च परं ब्रह्मोपास्यते तदा ऽविद्याकामादिनिवृत्त्या सद्यो मुक्तिः फलं यदि ऐश्वर्यादिमदुपास्योपरागेण तटस्थतया वा तदेव परं ब्रह्मोपास्यते तदैश्वर्यरागेणाविद्यानिवृत्त्यभावेन च कार्यब्रह्मगभोग्यमैश्वर्यं फलमिति। आधुनिकास्तु अप्रतीकालम्बनान्नयतीत्यादिसूत्रद्वयेनाधिकरणान्तरमेवं रचयन्ति तत्र मनआदिप्रतीकोपासकानां ब्रह्मलोकगमनं भवति न वेति संशये सिद्धान्तपादिसूत्रार्थः। द्वितीयसूत्रार्थस्तु यावन्नाम्नो गतिमित्यादिना श्रुतिर्नामादिप्रतीकानामुपासनेषु ब्रह्मलोकभिन्नं फलविशेषं च दर्शयतीति तन्न। अस्मिन्नर्थे मतान्तरा-

नुसारिण्या बादरायणा इत्यस्य वैयर्थ्यात् मतद्वय विरो धपरिहारार्थकत्वे सम्भवति यथा श्रुतार्थपरित्यागेना- धिकरणान्तरकल्पने गौरवाच्चेति ।

इति ब्रह्ममीमांसायां विज्ञानयतिकृते वि-
ज्ञानामृताख्यऋजुभाष्ये चतुर्था-
ध्यायस्य तृतीयपादः ।



परब्रह्मात्मा गतिर्विचारिता इदानीं तत्रत्यं परीक्षणीयं तत्र चैश्वर्यं पश्चात् परीक्षणीयं वि- ाक्यानुसारं बाध्यहिंततया चादौ मुक्तिः परीक्ष्यते।

## सम्पाद्याविर्भावः स्वेन शब्दात्।

पादद्वयोक्तप्रकारेण ब्रह्मलोकं सम्पद्य स्वेन स्वे- जीवस्य तात्त्विकचिन्मात्ररूपेणाविर्भावो भवति- ह्मलोकीयभोगानन्तरमिति शेषः कुतः शब्दात् प्र- पतीन्द्रसंवादे एवमेवैष संप्रसादो ऽस्माच्छरी- त् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणा- निष्पद्यत इतिश्रुतिरित्यर्थः। यथोदकं शुद्धे- मासिक्तं तादृगेव भवति एवं मुनेर्विजानत त्मा भवति गौतमेत्यादिश्रुत्यनुसारादितिभावः। ं ज्योतिपरं ब्रह्मज्योतिषामपि तज्ज्योतिरिति- ात् अत्राविर्भावशब्देनौपाधिकधर्मनिवृत्तिरेव- ारिति सूचितं स्मर्यते च मुक्तिर्हित्वान्यथाभावं रूपेण व्यवस्थितिं वस्तुतस्त्वत्राविर्भावोज्ञानमेव नेन सूत्रेण ब्रह्मलोकगतस्य मोक्षहेतुर्ज्ञान- उक्तः। द्वितीयसूत्रेण च मोक्षो वच्यत ागः। ननु तत्र गत्वा मुक्तो भवतीत्यत्र ामाह अथ वा ज्ञानपरिपाकात् किं ायामाह।

## रिज्ञानात्।

ब्रह्मलोके मत्वा योनिस्थानसंज्ञादिसाहुण्येन
त्वप्रकर्षात् प्रतिज्ञानं प्रतिपाद्यं वा नानात्मानां
तत्वज्ञानं भवति तस्मात् प्रतिज्ञानान्मुक्तो भवती
पथ वा श्रुत्वा न च पुनरावर्त्तते नच पुनरा
इति प्रतिज्ञाकरणान्मुक्तो भवतीत्यर्थः। ननु संप्र
द एव परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्प
इति श्रूयते न तु जीव इत्याशङ्कायामाह।

## आत्मा प्रकरणात्।

संप्रसादश्चात्मैव मन्तव्यः कुतः। प्रकरणात्
यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानातीत्ये
षात्मेति होवाचेत्यनेनादौ जीवस्य प्रक्रान्तत्वात्
र्मधर्म्यभेदेन च धर्मिशब्देन धर्मा लक्ष्यन्ते संप्रसा
रूपधर्मेण पूर्वप्रक्रान्तत्वात्तेनैव धर्मेण जीवस्यो
न्याय इति बोध्यम। अस्यां श्रुतावात्मशब्दस्तु परम
त्मवाची प्रक्रमस्त्वसौ जीव एव आत्मेतिवचनादि
ननु किमियं मुक्तिरपि जीवन्मुक्तक्रममुक्त्यादि
उतात्यन्तिको लय इत्याकाङ्क्षायामाह।

## अविभागेन दृष्टत्वात्।

समुद्रेण नदनदीनामिवाविभागेन ...
...ात्यन्तिकलयरूपैव मुक्तिः कुत
... परान्तकाले परामृता ता
...सानाः समुद्रे ऽस्तं

शानां कृष्णादिशरीरेषु कृष्णस्य वा षोडश
हस्रगोपस्थषोडशसहस्रशरीरेष्विति सिद्धानां
शिमनसोरयं विशेषः अंशिमनः संकल्पादे ।
तानां मनसामुत्पत्तिसंहारज्ञानेच्छाव्यापारा।
तन्त्रत्वाच्च । न पुनर्वैपरीत्यमिति प्रवृत्तिभेदे ।
चित्तमेकमनेकेषामिति पातञ्जलसूत्रादिति प
विष्णुशिवादीनामंशावतारेषु ज्ञानादिशक्तितार
म्यमंश्यपेक्षया ज्ञानाद्यल्पत्वं चोपपादितत्वात्
कृष्णादीनां विष्ण्वाद्यंशत्वं चोपाध्यंशेनौपाधिक
तमैक्येन पितुः पुत्रेष्विवांशत्वासम्भवादिति बोध्यम्
ननु ब्रह्मलोके विदुष ऐश्वर्यविशेष आविर्भवति
ष लोके इत्यत्र का युक्तिस्तत्राह ।

## स्वाप्ययसंपत्त्योरन्यतरापेक्षमावि
## ष्कृतं हि ।

स्वाप्ययः सुषुप्तं स्वं ह्यपीतो भवतीति व्युत्
त्त्या श्रुतौ स्वमितिनामनिर्वचनात् संपत्तिर्ब्रह्मल
कप्राप्तिः तयोरन्यतरापेक्षं सदेव तयोरन्यतरमपे
क्ष्यान्यतरान्तरमेवेति यावत् तदैश्वर्यमाविष्कृ
व्यक्तम् हि भवति नाप्रदायैश्चिकप्रपञ्चदर्शनप्रतिब
न्धादित्यर्थः । अत्र च श्रुतिः प्रमाणमिति भावः । तत्
ब्रह्मलोके तदैश्वर्या श्रुतिः संकल्पादेवास्य
पितरः समुत्तिष्ठन्तीत्याद्यनन्तरं त इमे सत्याः कामा

ष्टौ ईश्वरव्यापारं महदादिसृष्टिं वर्जयित्वैवान्यसृष्टौ कः प्रमात्रेणैश्वर्यं मन्तव्यं कुतः प्रकरणात् विद्याफल प्रकरणे स यदि पितृलोककामो भवति संकल्पादेवा स्य पितरः समुत्तिष्ठन्तीत्यादिना ऽवान्तरसृष्टेः सन्निहितत्वाच्च । महदादिसृष्टे विद्याप्रकरणे पाठाभा वाच्चेत्यर्थः । चशब्देनानुपपत्त्यादयो ऽपि ग्राह्याः सि- द्धस्य हि नित्यसंकल्पाद्यभावेन सर्गाद्यकालीनः संकल्पः स्वजनकसंकल्पान्तराभावेन न सम्भवति प्रकृतिस्वातन्त्र्यं च निराकृतमेव ईश्वराभ्युपगमे तु नायं दोषः धर्मिग्राहकप्रमाणेनेश्वरस्य नित्यसंकल्पादिनिमित्ततयैव सिद्धेरिति । ननूपासनादिसिद्ध एव देवताविशेषो महदादिप्रकरणेषूपदिश्यत इत्याशङ्कापाकरोति ।

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ।

ननु जगत्सृष्टावपि सिद्धो जीवविशेषः स्वयं ह्युपदिष्टो ऽस्ति यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः दिव्ये ब्रह्मपुरे ह्येष आत्मा संप्रतिष्ठित इत्यादिश्रुतावेव इत्यादिना प्रत्यक्षस्यैव विकारस्य पूर्वोक्तमहदादिसृष्टीश्वरत्वोपदेशादिति चेन्न । आधिकारिकमण्डलस्थोक्तेः अधिकारिणो हिरण्यगर्भस्य मण्डलमधिकारिकमण्डलं सूर्यमण्डलं निखिलज्योतिर्म-

[स्य प्रधानांशरूपं तत्त्वस्य तदन्तर्यामि गो
त्यपरमेश्वरस्यैव शाखाचन्द्रन्यायेन प्रदर्शनाऽ-
भेदेनोपासनार्थं यो एष इत्यादिशब्दैः प्रत्यक्षव्द-
त्वात्। ननु स्वरूपत एव प्रत्यक्षत्वमुक्तमित्यर्थः
ननु कथमेवं कल्प्यते श्रुतिबलात् प्रत्यक्षमूर्य एव-
श्वरो भवतु तदतिरिक्तेश्वरकल्पनायां गौरव मि
त्याशङ्कायामाह।

## विकारावर्त्ति च तथा हि स्थितिमाह।

न केवलं मण्डलरूपे विकार एव ब्रह्म प्रत्येत-
व्यम् किं तु विकाराद्बहिरपि कुतः हि यस्मात्तथा ब-
हिरन्तररूपेण द्विविधामेवेश्वरस्य स्थितिमाह श्रु-
तिः तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यत इ-
त्याद्या तथा स्मृतिरपि प्रकृत्यन्तमावरणं पुरुषं चो-
क्त्वा सर्वेषां बहिर्भो वरणमीश्वरोपाधिभूतमायाख्य-
शक्तिमाह।

विष्णुशक्त्या महाबुद्धेर्यस्तौ संश्रयधर्मिणौ।

इति प्रकृतिपुरुषयोर्विभुत्वे ऽपि तदुभयसंयोगे-
नाभिव्यक्तौ भागयोरेवं ब्रह्मशक्त्याद्यत्वं बोध्यम्। अथ
वा आवरणसंश्रयणो अधिष्ठेयत्वमात्रं तस्मादादित्या-
द्यतिरिक्तः परमेश्वरो ऽस्ति स एवादित्यादिमण्डलेषु
परिदृश्यत इति सिद्धम्। किं च स्पष्टमेवादित्यादि-

भ्यो भिन्नमपि आदित्यादिस्थमात्मान्तरं श्रुति संभव दर्शयन्त इत्याह।

## दर्शयतश्चैवं प्रत्यक्षानुमाने।

प्रत्यक्षानुमाने श्रुतिस्मृतीति तत्र य आदित्ये तिष्ठन्नादित्यादन्तरो ऽयमादित्यो न वेद यस्यादित्यः शरीरमित्याद्या श्रुतिः स्मृतिश्च।

पूजयेद्ब्रह्म विष्णवर्करुद्रविश्वात्मकं शिवम्।
व्रतोपवासैर्विधिवत्कृत्वा विगतमत्सरः।
योसावतीन्द्रियः शान्तः सूक्ष्मो ऽव्यक्तः सनातनः
वासुदेवो जगन्मूर्तिस्तस्य संभूतयो ह्यमी।
ब्रह्मा विष्णुश्च भगवान्मार्त्तण्डो वृषवाहनः॥
अष्टोत्तरसरश्चैव एकादशगणाधिपाः।
द्वादशैव तथादित्याः पितरो मातरस्तथा॥
इमा विभूतयः प्रोक्तास्चराचरसमन्विताः।
ब्रह्माद्यास्व चयो मूलमव्यक्ताधिपतेः स्मृताः॥

शक्तिमन्नावद्रूपहेतुवचनाद्ब्रह्मादिभ्योऽतिरिक्त ईश्वर एव शक्तिशक्तिमदभेदाद्ब्रह्माद्यात्मक उक्त इति भोगमात्रसाम्यलिङ्गादपि जगद्व्यापारे नास्ति सिद्धस्य शक्तिरित्याह।

## भोगमात्रसाम्यलिङ्गाच्च।

सो ऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चि-

न यथैतां देवतां सर्वाणि भूतान्यवन्ति एवं हैनं सर्वाणि भूतान्यवन्ति तेन एतस्यै देवतायै सायुज्यं सलोकतां जयतीत्यादिश्रुतौ परमेश्वरेण सह तद्विदुषां भोगमात्रं समानं श्रूयते अनेन च लिङ्गेनानुमीयते महदादिसृष्टौ तस्य शक्तिर्नास्ति किं तु परमेश्वरस्यैवेतीत्यर्थः। श्रुतौ ब्रह्मणा परब्रह्मणोपास्यमेनेत्यर्थः। अवन्तु सेवकरूपा लयन्तीत्यर्थः। सायुज्यं चोपास्ये प्रविश्य तेन सहैकीभावेनैकरूपो भोग इति एकत्वरूपा तु मुक्तिरुपाधेरत्यन्तलयादत्यन्तलय इति विशेषः अत्रेश्वरमपि भोग इतिमन्तव्यं। नन्वेवमुपासामिश्रातिरिक्तेश्वराभ्युपगमे ब्रह्म वेद ब्रह्मैव भवति स इदं सर्वं भवतीत्यादिश्रुतिविरोध इति चेन्न। अधिष्ठात्रादिरूपेण प्रायशः सर्वव्यापकत्वेनैव ब्रह्मत्वसर्वभावयोः फलवाक्यैकत्वात् सर्वं समाप्नोषि ततो ऽसि सर्व इतिगीतादौ तथा वचनदर्शनात्। न तु मृत्तिकाया घटशरावादिभाववदखिलकार्यकारणत्वेनेति। नन्वेव सातिशयत्वादैश्वर्यस्य तेषां कषायसंभवे पुनरावृत्तिरपि स्यादित्याशङ्क्याह।

# अनावृत्तिः शब्दादनावृत्तिः शब्दात्।

ये कार्ये ब्रह्मणि गता वा परब्रह्मणि वा भोगार्थं गतास्तेषां तद्भोगसमाप्त्यनन्तरं पुनरावृत्तिर्जन्म नास्ति कुतः शब्दात् ब्रह्मलोकमभिसंपद्यते न च पुन-

रावर्तते इति शब्दप्रामाण्यादित्यर्थः । यच्च कषायसंभव इत्युक्तं तन्न ब्रह्मलोकादधिकसुखस्य नित्यत्वेनासाध्यतया तत्र कषायासंभवादिति । अत्र चायं विशेषः कार्यब्रह्मणि गतानामपुनरावृत्तिरौत्सर्गिकी कारणब्रह्मणि गतानां चापुनरावृत्तिनियता ।

आब्रह्मभुवनाल्लोकापुनरावर्तिनोऽर्जुन ।

मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥

इति श्रीकृष्णवाक्यात् । न चात्र विष्णुलोकादनावृत्तिरयोगयुक्तः विष्णुलोकादप्यावृत्तिस्मरणेनात्र वाक्ये मामित्यनेन परमात्मन एवोक्तत्वादिति अनावृत्तिः शब्दादिति समगसूत्रस्य पुनः पाठः शास्त्रसमाप्तिसूचनार्थः । अत्रायं ब्रह्ममीमांसानिर्गलितार्थः संक्षेपादुच्यते यश्चेतनविशेषो नित्यज्ञानेच्छादिमन्मायाख्य निजशक्तिवशात् सर्वेश्वरः क्लेशकर्मविपाकाशयैरौपाधिकैरप्यपरामृष्टोऽपि स्वान्तःस्थैः प्रकृतिपुरुषादिशक्तिभिरन्योन्यसंयोगान्महदादिकं सृजति ऊर्णनाभिप्रभृतिरिव तन्त्वादिकं ततश्च तावेवान्तः प्रविश्यान्तर्यामी स न धारयति प्रकृत्यापूरेण स्थापयति च कर्माणि तानि च प्रयच्छति महाराजइव सेवापराधयोः फलं पुनश्च तानेवान्ते स्वात्मन्युपसंहृत्याद्वितीयः सत्वेक एवावशिष्यते समुद्रे तरङ्गबुद्बुदादिवत् क्षणभङ्गुरं मायेन्द्रजालादिसदृशं ?क्षीरोदधिरिव पृथिवी तत् कार्याणां प्रलये अतश्चं न

यतो भिन्नं किमपि न भवति सर्वं खल्विदं ब्रह्म तज्ज-लानिति श्रुतेः। यस्मिंश्च विकारजातं सर्वं वाचारम्भ-णमात्रं समुद्रे तरङ्गबुद्बुदादिवत् क्षणभङ्गुरं म-यैन्द्रजालादिसदृशं यस्य च सूर्यकिरणादिवत्सर्वे जी-वा अंशाः यदधीनसत्तास्फूर्त्तिकत्वात्तु प्रकृतितद्गु-णजीवादयो ऽपि स्वप्ने वस्तुदृश्यत्वेन स्वतः सिद्ध्य-भावेन च न परमार्थसन्तः यश्च स्वतो मायातद्गुण-जीवादिभ्यो भिन्नाभिन्नो जीवाविलक्षणचिन्मात्रो ऽपि न तेषां दोषैः कदापि लिप्यते अत एव च यः पञ्च-विंशतितत्त्वानामात्मा जीव इव कार्यकारणसंघातस्य तन्तुरिव च पटस्य यदपेक्षया च भोक्तात्मा जीवो ऽपि प्राणादिवज्जडतया ऽनात्मेव तमेव परमात्मानं परं ब्रह्म निखिलवेदान्तमहावाक्यार्थभूतं शमदमा-दिसाधनसंपन्नो विद्वान् स मम आत्मेति सो ऽहमिति मायाजीवादिविवेकेनात्मतया साक्षात्कृत्याविद्या-कामधर्माधर्मादिक्षये निखिलदुःखादिकैवात्यन्तं वि-मुच्यते न तस्य प्राणा उत् क्रामन्तीति श्रुतेः। यस्तु मायाजीवाद्यविवेकेन तदेव ब्रह्मोपास्ते यो वा। तिरिक्तब्रह्मांशामौत्नन्निष्ठानापन्नः सो ऽप्रतीकालम्ब-नतया ऽर्चिरादिकार्यब्रह्मलोकान्तवर्त्मना ब्रह्माण्डा-त्मावरणाद्बहिः कारणब्रह्मणि मायाशबले गत्वा हि-रण्यगर्भादीन् प्राप्यैश्वर्यं तु ——परमेश्वरेच्छया" तल्लीलावतारह्रूपेण अन्ते च परब्रह्मण्येवोपसंहार।

उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिश्चये ॥

इति सर्वसम्मतानां तात्पर्यग्राहकलिङ्गानामत्र दर्शनात् ब्रह्मशेषतयैव सांख्यादिशास्त्रैरिव जीवतत्त्वस्य निरूपितत्वात् तन्निरूपणस्य पूर्वमीमांसानिरूपितकर्मशेषतयैवाभिभूयते स्वेच्छया तत्रैवमुच्यते ब्रह्मविद्यारुद्रादिषु पञ्चविंशतितत्त्वेषु वा ब्रह्मदर्शनं तु विद्वानसतीकालम्बनतया कार्यं ब्रह्मलोकं प्राप्य तत्रैव भुक्त्वा द्विपरार्द्धान्ते परिपक्वज्ञानस्सैद्ब्रह्मादिभिः सहैवमुच्यते तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिरिति सांख्यस्त्वात्—नोचेत्सर्गान्तरे ऽधिकारिब्रह्मादिरूपेणाविर्भवतीति इदं तु पञ्चमूत्र्यामुक्तमिति योगात्महदादिकं सृजति ऊर्णनाभिप्रभृतिरिव तत्त्वादिकं ततश्च तानेवान्तः प्रविश्यान्तर्यामी स न धारयति प्रकृत्यापूरेण स्थापयति च कर्मफलानि च प्रयच्छति महाराज इव सेवापराधयोः फलं पुनश्च तानेवान्ते स्वात्मन्युपसंहृत्याद्वितीयः सन्नेक एवावशिष्यते महोदधिरिव पृथिवी तत्कार्याणां प्रलये अतश्च यतो भिन्नं किमपि न भवति "सर्वं खल्विदं ब्रह्मतज्जलानि" तिश्रुतेः । यस्मिंश्च विकारजातं सर्वं वाचारम्भणमात्रं समुद्रे तरङ्गबुद्बुदादिवत् क्षणभङ्गुरं मायेन्द्रजालादिसदृशं यस्य सूर्यकिरणादिवत्सर्वे जीवा अंशाः यदधीनसत्तास्फुर्तिकत्वात्तु प्रकृतितद्गुणजीवादयो ऽपि स्वा-

प्रवस्तुवत् दृश्यत्वेन स्वतः सिद्धत्वाभावेन च न पर-
मार्थसन्तः यश्च स्वतो मायातद्गुणजीवादिभ्यो भि-
न्नाभिन्नो जीवाविलक्षणचिन्मात्रो अत एव च :
पञ्चविंशतितत्त्वानामात्मजीवकार्यं कारणसंघात-
तत्सृष्टिं च परस्य यदपेक्षया च भोक्तात्मा जीवो प्रा-
णादिदिव्यज्जडतया ऽनात्मैव तमेव परमात्मानं पर
ब्रह्म विलिख्य निखिलवेदान्तमहावाक्यार्थभूतं शम-
दमादिसाधनसंपन्नो विद्वान् स स आत्मेति सो ऽह
मिति मायाजीवादिविवेकेनात्मतया साक्षात्कृत्या वि-
द्याकामधर्माधर्मादिक्षये निखिलदुःखादिभिर्विरहया
लक्तं विमुच्यते न तस्य प्राणा उत्क्रामन्तीति श्रुतेः
यस्तु मायाजीवाद्यविवेकेन तदेव ब्रह्मोपास्ते यो वा
तिरिक्तब्रह्मा स्वामी तन्निष्ठामापन्नः सो ऽप्रतीकालम्ब-
नतया ऽर्चिरादिकार्यब्रह्मलोकान्तवर्त्मना ब्रह्मा-
ण्डात् सावरणाद्बहिः कारणब्रह्मणि मायाशबले ग-
त्वा हिरण्यगर्भादीन् प्रत्यगैश्वर्यं भुक्त्वा परमेश्वर-
च्छया तल्लीलावताररूपेण शश्वदाविर्भूय च स्वेच्छया
तत्रैव मुच्यते ब्रह्मादिगणरुद्रादिषु पञ्चविंशतितत्त्व
वा ब्रह्मदर्शनं तु विद्वानप्रतीकालम्बनतया कार्यब्रह्म-
लोकं प्राप्य तत्रैव भुक्त्वा द्विपरार्धान्ते परिपक्वज्ञान-
र्थब्रह्मादिभिः सहैव मुच्यते तत्र प्राप्तविवेकस्यानावृ-
त्तिश्रुतिरिति सांख्यसूत्रात् नो चेत् सर्गान्तरे ऽधि-
कारिब्रह्मादिरूपेणाविर्भवतीति इदं तु पञ्चसूत्र्यामु-
क्तमपि पुनः स्मर्यते इद शास्त्रं जीवासिद्धपरं न

भवति अथातो ब्रह्मजिज्ञासेति परब्रह्मविचारस्यैव प्रतिज्ञातत्वात् अन्ते च परब्रह्मण्येवोपसंहारात्।

उपक्रमोपसंहारावभ्यासो ऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिश्चये॥

इति सर्वसम्मतानां तात्पर्यग्राहकलिङ्गानामेव दर्शनात् ब्रह्मशेषतयैव सांख्यादिशास्त्रैरेव जीवतत्त्वस्य निरूपितत्वात् तन्निरूपणस्य पूर्वमीमांसानिरूपणवद्व्यर्थत्वात्[1]। न चात्र ब्रह्मखण्डनतया जीवनिरूपणेन वैयर्थ्यं स्यादितिवाच्यम् तथा सति तस्यैव मुख्यतः शास्त्रार्थतया ऽथातो जीवब्रह्मैक्यजिज्ञासेत्येव प्रतिज्ञासूत्रं युज्येत न पुनरेकदेशप्रतिज्ञाकरणं किं चाखण्डता यदि कुत्रापि सूत्रे स्फुटमुपलभ्यते तदेवमपि दया कथं चित् कल्प्येत तदेव तु नेति कथं यथाश्रुतार्थं परित्यज्य मुमुक्षवः कथं श्रद्दधीरन्निति दिक्।

ब्रह्मादिभिरशक्ये ऽस्मिन् ब्रह्मतत्त्वनिरूपणे।
साहसं मद्विधस्येदं भगवान् क्षन्तुमर्हति॥
येन भूयो न धादुःखं भोक्ष्ये दृश्यमनोतिगः।
त्वय्यनन्ते सुखाब्धिस्थे शयिष्ये च गतज्वरः॥
अथ वा ऽज्ञानतो ऽप्यस्मिन्नपराधो ऽल्पको ऽपि मे।
सर्वकर्तुर्हि भवतो दारुयन्त्रसमा वयम्॥

---

[1] सत्रलिमघोरिदहकिः प्रतिभाति।

किंचापराधः कर्तुः स्यान्नाहं कर्ता चिदात्मकः ।
नापि बुद्धिर्विवेकित्वाद्धर्माधर्मसमुद्भवः ॥
मत्वाचित्तबुद्धिकृतया सेवया शास्त्ररूपया ।
आत्यन्तिकीं दुःखहानिमीशस्तस्यै प्रयच्छतु ॥

इति ब्रह्ममीमांसायां विज्ञानभिक्षुकृते वि
ज्ञानामृताख्यऋजुभाष्ये चतुर्थाध्या-
यस्य चतुर्थः पादः समाप्तं चेदं
वेदान्तदर्शनम् । श्रीकृष्णच-
रणे मम भक्तिरस्तु ।

